# शक्तिमज्जीवितायै मे शक्त्यै भूयान्नमस्तातिः

*डॉ. सिद्धिदात्री भारद्वाज*[*]

अनुत्तरमहेश्वरः चिदेकघनः स्वभावभूतशक्तिसमाश्रयणेन संविद्रूपः सततं स्फूर्तिसमूर्जितो वस्तुत एकोऽपि विश्वरूपतया प्रथते। तदेतत् प्रथनं प्रकाश इत्याख्यायते। न चायं प्रकाशो विमर्शेन विना स्वां सत्तां विज्ञप्तिं वाऽनुविन्दति। काश्मीरशैवागमदर्शने भगवतः शिवस्य प्रकाशरूपतया अवधारणं चेद् शक्तेः शिवायाः विमर्शरूपतया अवधारणं विहितमिति जानन्त्येव विदः सुधियः। न हि शिवां शक्तिं विना सर्वेश्वरस्य शिवस्य विश्वरूपतया प्रभवतः स्पन्दनमपि सम्भवति। तामेनां शक्तिसमृद्धिं स्मरन्ति भगवत्पादा आद्यशङ्कराचार्या जगद्गुरवः। तद्यथा—

**शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं**

**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि।**

**अतस्त्वामाराध्यां हरिहरविरिञ्चादिभिरपि**

**प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवति॥**[1]**इति**

भगवतः शक्तिरियं स्वातन्त्र्यशक्तिरिति विमर्शशक्तिरिति परामर्श इति आमर्श इति प्रत्यवमर्श इत्येवमादिभिः शब्दैः शास्त्रेषु व्यवह्रियमाणा चकास्ति।

एकैव भगवतः शक्तिरियं यद्यपि वस्तुतः, तथापि नामकार्यविभेदेन त्रिधा, पञ्चधा, पञ्चविंशतिधा षट्त्रिंशद्विधा वा अनन्तस्वरूपा वा प्रोच्यते। निगमागमोद्यानयोः बहुधा शक्तिप्ररूपणं विलसति। क्वचिद् शक्तिरियं चिदानन्दादिप्रभेदैः अन्यत्र खेचरीप्रभृतिप्रभेदैः, इतरत्र पराप्रभृतिप्रभेदैः, अन्यत्र अघोराद्यात्मप्रभेदैः, क्वचित् वामाज्येष्ठादिप्रभेदैः, अन्यत्र ब्राह्मीप्रभृतिप्रभेदैः विभिन्नप्रस्थानेषु शैव-सौर-बौद्ध-वैष्णवादिषु च विभिन्नाभिः संज्ञाभिः एकाऽपि भगवती स्तुत्या चोपगम्या श्रद्धेया निरूप्यते।

सैषा स्वातन्त्र्यशक्तिः विमर्शपदेन समधिकं शास्त्रेषु प्रथमाना चकास्ति। प्रकाशविमर्शयोः यत् सामरस्यं तस्य पराकाष्ठा संविद् इत्युच्यते। सर्वेषु शास्त्रेषु संविद् नमस्या निरूपणीया चास्ते। परं शैवागमदर्शने ग्रन्थेषु संविदः स्वरूपं तदीयमुपादेयत्वं च सम्यक् तथा प्रतिपादितं यथा अन्यदर्शनेषु कृतानां प्रतिपादनानां स्वरसत एवाङ्गत्वं संजातम्। यदुक्तं महामहोपाध्यायेन महामाहेश्वरेण—

''**सर्वागमनदीसंघोप्येति यत्प्राप्य पूर्णताम्।।इति**[2]

**स्तुत्यानया तोषमुपागतौ तौ Øीडापरौ विश्वविलासभाजौ गौरीमहेशौ कुरुतां समन्ताद् दासान् निजोल्लासभरान् विशुद्धान॥ इति च।** [3]

**स्तोत्रेण रामेश्वरनिर्मितेन**

**यः स्तौति या वापि शिवं शिवां च।**

**नाप्नोति दुःखं स वियोगजन्यं**

**प्राप्नोति तूर्णं शिवसामरस्यम्॥**

सर्वमङ्गलागमे शिवशक्तिमतोः स्वभावस्वभाविनोः समुल्लसितं सामरस्यं तयोरैक्यं वा स्फुटमभिधीयते। तद्यथा—

**शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।**

**शक्तयोऽस्य जगत् कृत्स्नं शक्तिमांस्तु महेश्वरः**[4]**।इति।**

तदेवं शैवागमदर्शने यद्यपि शिव इत्यभिधीयतां शक्तिरिति वा नास्ति तयोर्भेदो मनागपि तथापि शक्तिः शक्तिमानिव स्वातन्त्र्येण परतत्त्वं नाभ्युपगम्यते। क्तिन्-प्रत्ययाभिधेयायाः शक्तेः मतेरिव केनचिदाधारेण शक्तिमता विना अनुपपद्यमानत्वात्। यथोक्तम्—

**''न हि स्वतन्त्रं शक्तिस्वरूपं भवितुमर्हति।''इति**।[5]

नामकार्यविभेदेन शक्तिरेकापि विभिन्नाभिः संज्ञाभिः अभिधीयते किलागमिकैः। यथोक्तमभिनवगुरुणा—

**''पूर्णतैवास्य शक्तिः कुलं सामर्थ्यम् ऊर्मिः हृदयम् सारः स्पन्दः विभूतिः त्रीशिका काली कर्षणी चण्डी वाणी भोगो दृक् नित्या इत्यादिभिरागमभाषाभिस्तत्तदन्वर्थप्रवृत्ताभिरभिधीयते, तेन तेन रूपेण ध्यायिनां हृदि आस्तामिति।**[6]

यत् सम्पूर्णमपि विश्वं भाति तद् विद्यते प्रतिबिम्बितं शक्तिमति शिवे ततो नास्य प्रतिबिम्बस्य पृथक्पदार्थता। अथ यया शक्त्या प्रतिबिम्बनं भवति सा करणस्वरूपा यद्यपि तथापि शक्तिमतः स्वभावः सा न स्वस्वभाविनः शक्तिमतो व्यतिरिच्यते। लोके आदर्शभित्तौ भासितं प्रतिबिम्बं यद्यपि ततो विभिन्नं न तिष्ठति तथापि असदेव यतः तत्र आभाति शक्तौ तु आश्रिते तस्मिन् असतो भेदस्य भानमपि न भवति। सोऽयं विशेषः विमर्शिनीकृता निष्कर्षवचनेन प्रकाशितः। यदुक्तम्—

* असिस्टेंट प्रोफेसर, संस्कृतविभागः कलासंकाय, काशी हिन्दू विश्वविद्यालय, वाराणसा

**व्यतिरिक्ता न चैवैषा कर्तृत्वं शक्तिरुच्यते। इति**[7]

**स्वातन्त्र्यमात्रसद्भावा या त्विच्छा शक्तिरैश्वरी।**

**शिवस्य सैव करणं तया वेत्ति करोति च।।इति**[8]

**प्रतिबिम्बे हि भेदोऽसन्नप्याभाति तावत्, शक्तौ तदपि नेति। इति च''**[9]

शिवस्य या उल्लासनकर्तृता सा स्वभावप्रत्यवमर्शरूपा भाति। तत्र द्वौ सूक्ष्मप्रभागौ भासेते—संवेदनं संरम्भश्चेति। प्रकाशमयः संवेदनभागः ज्ञानशक्तिरिति विमर्शनमयः संरम्भभागस्तु क्रियाशक्तिरित्युच्यते। यदुक्तम्—

**वस्तुत एकैव ईश्वरस्य स्वभावप्रत्यवमर्शरूपा शक्तिः। सा संवेदनरूपत्वात् ज्ञानशब्देन उच्यते। तावन्मात्रसंरम्भरूपत्वात् क्रियाशब्देन चोद्घोष्यते। इति**[10]

वस्तुतः शक्तिरैकैव स्वभावभूता महेश्वरस्य अथापि विश्वोत्तीर्णे महेश्वरे चिच्छक्तिरूपेण आनन्दशक्तिरूपेण च विजृम्भमाणा सती सन्तिष्ठते सा, विश्वमयोल्लासने तु सृष्टिस्थितिसंहारनिग्रहानुग्रहसंज्ञकानां पञ्चानां कृत्यानां सम्पादने इष्यते, वेद्यते अथ च सम्पाद्यते प्रकाशसंलग्नतया यतस्ततः शक्तिस्त्रिरूपा समाभाति—इच्छाशक्तिः, ज्ञानशक्तिः क्रियाशक्तिश्चेति। महेश्वरे स्थिता ज्ञानशक्तिः, पशौ सत्त्वगुणतया परिणता भवति, क्रियाशक्तिः रजोगुणतया अथ मायाशक्तिः तमोगुणतया परिणता भवति।

सर्वत्रौन्मुख्ये इच्छाशक्तेः, प्रयोजकता विद्यते। ज्ञानशक्तौ द्रष्टा उपरज्यते क्रियाशक्तौ दृश्यमुपरज्यते, इच्छाशक्तौ न द्रष्टा उपरज्यते न वा दृश्यम्। मायाशक्तौ दृश्यंप्रधानतया उपरज्यते द्रष्टा तु गौणतया इत्येव विशेषः। यदुक्तम्—

**स्वाङ्गरूपेषु भावेषु पत्युर्ज्ञानं क्रिया च या।**

**मायातृतीये ते एव पशोः सत्त्वं रजस्तमः।।इति**[11]

**ता एतास्तिस्त्रः शक्तयो भगवति नैसर्गिक्यो दृष्टाः। इति च।** [12]

शक्तिरियमेका तत्त्वतया शुद्धाध्वरूपेण परिणता पञ्चभिः संज्ञाभिः प्रथमाना पञ्चधा प्रतिपाद्यते— चिद् आनन्दः इच्छा ज्ञानं क्रिया चेति। महेश्वरस्य प्रकाशरूपता चिच्छक्तिः शिवतत्त्वरूपेण परिणता भाति, स्वातन्त्र्यम् आनन्दशक्तिः शक्तितत्त्वरूपेण परिणता भवति, इच्छाशक्तिः प्रभोः चमत्कारात्मा सदाशिवतत्त्वरूपेण भाति, आमर्शात्मकता ज्ञानशक्तिः ईश्वरतत्त्वरूपेण परिणता भवति, सर्वाकारयोगिता क्रियाशक्तिस्तु शुद्धविद्यातत्त्वरूपेण भाति। यदुक्तम्—

**तस्य देवादिदेवस्य परबोधस्वरूपिणः।**

**विमर्शः परमा शक्तिः सर्वज्ञा ज्ञानशालिनी।।इति**[13]

**प्रकाशस्य जडवैलक्षण्यं संरम्भः कर्तृतारूपो यः स एवात्म-विश्रान्तिलक्षणो निरपेक्षत्वेन विमर्शोऽहमिति कथ्यते। इति**[14]

**सा चिदानन्देच्छाज्ञानक्रियारूपशक्तिपञ्चकसामरस्यस्वभावेत्याख्यायते। इति**[15]

**विमर्शशक्तिश्च परा परमेश्वरी भैरवभट्टारकस्य निरतिशयस्वातन्त्र्यात्मिका पूर्णकृशतदुभयात्मरहितत्वेनावतिष्ठते। इति च**[16]

यतश्च विमर्शशक्तिः महेश्वरस्य नित्या विभूतिः स्वभावभूता शक्तिः विद्यते अतो महेश्वरः विमर्शस्वभाव आम्नायते। प्रभोः विमर्शः दुःसहतया प्रतीयमानमपि सहते यत्र स्वरसतः संघटते— परस्यापि आत्मीकरणम्, आत्मनः परीकरणम्, उभयोरेकीकरणम्, एकीकृतस्य द्वयस्यापि न्यग्भावनम्— इत्येवमादि। यदुक्तम्—

**विमर्शो हि सर्वंसहः परमाप्यात्मीकरोति, आत्मानं च परीकरोति, उभयमेकीकरोति, एकीकृतं द्वयमपि न्यग्भावयति– इत्येवं स्वभावः इति।**[17]

इयं प्रभोः विमर्शशक्तिः निर्बाधं विश्ववैचित्र्यम् उद्भावयति। इच्छारूपतया ज्ञानक्रियारूपतया बीजयोन्यादिरूपतया वर्गकलाभेदरूपतया च प्रतिभासमाना एषा क्षोभमात्मसात्कृत्वा विश्वमातनुते। यथोक्तम्—

**एकैव अभिन्नाप्यसौ तदीया विमर्शशक्तिः इच्छात्वं प्रतिपद्य ज्ञानक्रियारूपतया स्थित्वा शिवशक्तिपरामर्शात्मकबीजयोनिभेदेन द्विधा भूत्वा.....नवधा पञ्चाशद्धा च स्फुरन्ती.....। इति**[18]

शुद्धचेतना प्रकाशविमर्शयोः सामरस्यस्वरूपा स्वयं प्रकाशते। स्वयं प्रकाशमानां स्वविमर्शनमपि कुर्वतीमेनां संविदमाहुरागमिकाः। अर्थजातं प्रकाशयन्त्या अस्या भावस्वभावता घटते। अर्थप्रकाशः अन्योन्यं यदि भिद्येत तदा स्मरणं प्रत्यभिज्ञा वा नोपपद्येतेति सर्वस्यापि वेद्यराशेः संविद्गर्भरूपता नूनमङ्गीकरणीया। अन्यथा स्मृत्यादीनामुपपत्तेरभावात् सर्वव्यवहारः उच्छिद्येत।

यतो देशस्य कालस्य चाभासभित्तिभूता इयम्, ततः संविदः कालस्पर्शराहित्यमेव अङ्गीक्रियते, अकालकलितामेनाम् एकाम् अतिरोहितामज्ञेयां मातृमेयादिरूपिणीमामनन्ति रहस्यविदः। यथोक्तम्—

**संविद् यदि स्वात्ममात्रविश्रान्ता, अर्थस्य सा कथं प्रकाशः। स हि अर्थधर्म एव तथा स्यात्। ततश्चार्थप्रकाशस्तावत्येव पर्यवसितः, इति गलितो ग्राह्यग्राहकभावः। स चार्थप्रकाशो यदि अन्यश्चान्यश्च तत्र स्मरणमुपपन्नम्। इत्यत एक एवासौ। इति**[19]

**उच्छलन्त्यपि संवित्तिः कालक्रमविवर्जनात्।**

**उदितैव सती पूर्णा मातृमेयादिरूपिणी।।इति**[20]

**ये त्वभ्यासपथेन संविदमिमां संस्कर्तुमभ्युद्यतास्**

**ते किं कुत्र कुतः कथं विदधतामित्यत्र संदिह्महे।। इति**[21]

**यदि पुनः सुखादिवेद्यवस्तुसम्बन्धात् सुखादिवत् संविदोऽपि अहम्प्रत्ययरूपाः परमार्थत एव बह्व्यः स्युः, तदा स्मृतिप्रत्यभिज्ञाद्यनुसन्धानं न स्यात्। असति च तस्मिन् सर्वव्यवहारोच्छेदः प्रसक्तः। इति च**[22]

यावन्ति प्रमाणानि तैस्तैः तीर्थंकरैः प्रतिपाद्यन्ते तेषां समेषामपि अवभासिका संविदेव भगवती प्रभवतीति केनचित् प्रमाणेन नास्याः सिद्धिरपेक्ष्यते। यथाहुर्महामहोपाध्यायाः परमगुरवः—

**प्रमायां न प्रवर्तन्ते मानानि यदुपेक्षया।**

**किं प्रमाणं भवेत् तत्र मानप्राणान् वितन्वति॥**

**सर्वावभासकस्यास्य परापेक्षा न विद्यते।**

**निरपेक्षोऽस्त्यतः पूर्णः स्वतन्त्रः सर्वभासकः॥**

**न नियताकृतिस्तस्य देशो न नियतः प्रभोः।**

**यतो हि विश्वरूपत्वे नैयत्यं प्रतिबन्धकम्।इति**[23]

प्रमाणप्रमेयादिरूपतया भासमानाऽपि संविद् अजडा एका प्रस्फुरत्स्वरूपा चित्राऽप्येकरूपा जगदुत्पतिस्थितिलयभूमिराभासते। अहन्तारूपाया अस्या विमर्शांशप्राधान्यं महेशानत्वं विश्वरूपत्वं सर्वकारणत्वं स्वप्रमाणत्वं च विलसति। प्रमातृवह्निस्वरूपाया अस्याः प्राक् प्राणे परिणतिरिष्यते। यथोक्तम्—

**संविदाप्यपरामर्शरूपा चेत्तदसावपि।**

**अभावेन जडेनाथ तुल्यैव प्राग्वदात्मनि॥**

**सैवंभूतात्मना स्वेनाप्यलब्धपरिनिष्ठितिः।**

**कथमन्यस्य भावस्य प्रतिष्ठास्पदतामियात्॥ इति**[24]

**सर्वमेतत् संविद्रूपतयैवावभासते न तु बाह्यतया। इति**[25]

**संविन्महिम्ना कुम्भकृति दण्डचक्रादौ घटेऽवस्थिते तन्महिम्नैवाभिमानो जायते यथा मया इदं कृतम्, अनेनेदं कृतम्, मम हृदये स्फुरितम्, अस्य हृदये स्फुरितमिति।......इति संवित्स्वभावे कर्तृत्वं व्यवस्थाप्यते। इति**[26]

**सा चान्तःस्थितमन्त्रात्मशब्दनामर्शसुन्दरा।**

**अनपेक्षान्यविरहात् प्रमाणं स्वत एव हि।इति**[27]

**यथाग्निना समाविष्टं सर्वं तद्रूपमीक्ष्यते।**

**तथा ज्ञानसमाविष्टं सर्वं तद्रूपमीक्ष्यताम्।इति।।**[28]

संविदः नैजो धर्म एष यदसौ विश्वाकारतया भासमानोऽपि स्वस्वरूपान्न प्रच्यवते। सृष्टिधर्मिता नाम तेन तेन रूपेण स्फुरत्ता सैव महेश्वरत्वं संविदः स्थापयति अन्यथा घटादिवज्जडता तत्रापि आपादिता भवेत्। यदुक्तम्—

**अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः।**

**महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत्।इति**[29]

शक्तिमज्जीवितामेनां शक्तिं शिवां शिवं च भूयो भूयः प्रणम्य कृतार्थतामनुविन्दामि—

समुच्छलन्त्यै जगदात्मिकायै शान्तस्वरूपाय सदाशिवाय।

सते भवन्त्यै भवते च सत्यै नमः शिवायै च नमः शिवाय।।

**पादटिप्पणी–**

1. सौन्दर्यलहरी - श्लोक संख्या 1
2. श्रीपूर्णताप्रत्यभिज्ञावचनम्।
3. शिवशिवास्तोत्रवचनम्
4. उद्धृतम् - प0सा0वि0, पृ0-10
5. ई.प्र. विमर्शिनी, खण्ड-1, पृ0-275
6. तन्त्रसारः, पृ027
7. नेत्रतन्त्रम् 21/40
8. श्रीतन्त्रालोकः 10/17
9. ई0प्र0वि0वि0, खण्ड-3, पृ0 270
10. स्पन्दविवृतिः, पृ0-42
11. ईश्वरप्रत्यभिज्ञा, 4/1/14
12. ईश्वरप्रत्यभिज्ञाविर्शिनी, खं0-2, पृ0 254
13. नेत्रतन्त्रोद्योते उद्धृतम्, श्रीकालीकुलवचनम्, खं.1, पृ0-21
14. ई0प्र0वि0वि0, खण्ड-2, पृ0 182
15. महार्थमञ्जरीपरिमलः, पृ0-182
16. परात्रीशिका वि0 पृ0-165
17. ई0प्र0वि0वि0खं0-1, पृ0 205
18. स्पन्दनिर्णयः, पृ0-66
19. ई0प्र0वि0,खं0-1, पृ0-107
20. श्री0त0आ-3-128
21. मा0वि0 वा0 2/4
22. स्प0वि0, पृ0-27
23. श्री पू0प्र0 का0-1/38-40
24. अ0प्र0सि0 9/10
25. श्री0त0आ0वि0, खं0-7/2, पृ0 77
26. ई0प्र0वि0,खं0 2, पृ0 140
27. मा0वि0वा0 1/434
28. स्प0 प्र0, पृ0 36
29. श्रीत0 आ03/100

●

# वेदमार्त्तण्डः श्री करपात्रस्वामि मतानुसारेण आधुनिक काले वेदानां स्वरूपम्

*डॉ. प्रियङ्कर अग्रवाल*[*]

अथेदानीं वेदस्वरूपविमर्शाभिधो विषयः अनन्तश्रीकरणापात्रिस्वामिभिस्तपोमूर्तिभि प्रकाशितः बौद्धमतावलम्बिनां वैज्ञानिकदृष्टिमावहतामाधुनिकानाम् आर्यसमाजान्तर्गतानां विवेचकानाञ्च या विचारधारा वेदस्वरूपविषये, साऽत्र स्वामिचरणैः परिशीलिता वर्तते।

आस्तिकनास्तिकभेदेन विभक्तेषु दर्शनप्रस्थानेषु आस्तिकदर्शन प्रस्थानानि वेदस्वरूपविषये मतभेदमावहन्त्यपि तत्प्रामाण्यविषये न तेषां काचन विप्रतिपत्तिः। शब्दस्य पृथक्प्रामाणत्वमनङ्गीकुर्वन्तो वैशेषिका अपि वेदप्रामाण्यं निर्विचिकित्समभ्युपयन्ति। आस्तिकदर्शनेष्वेकैकस्य तत्तत्सूत्रकारनुमता स्वस्वदर्शनानुकूला पद्धतिः मर्यादा च काचन नियता। नियताया अस्याः पद्धतेः मर्यादायाश्च निर्वाहाय तत्तत्सूत्रकारान्तरकालीनाः सर्वेऽपि दार्शनिकास्सम्प्रवृत्ताः। अमीषां पदार्थेषु तदुपपादकप्रकारेषु तत्प्रामाण्याधायकेषु च प्रमाणेषु सत्यमपि मतभेदे, वेदप्रामाण्यप्रतिक्षेपाय प्रवृत्तानां वेदबाह्यानां मतनिरासाय 'अन्यैस्सह विरोधे तु वयं पञ्चोत्तरं शतम्' इति न्यायमवलम्बमाना दार्शनिका एकीभवन्ति।

यदपि- ''भरद्वाजो ह त्रिभिरायुर्भिर्ब्रह्मचर्यमुवास। तं ह जीर्ण स्थविरं शयानमिन्द्र उपव्रज्योवाच-भरद्वाज यत्ते चतुर्थमायुर्दद्यां किमेतेन कुर्या इति। ब्रह्मचर्यमेवैतेन चरेयमिति होवाच। तं ह त्रीन् गिरिरूपान विज्ञातानिव दर्शयाञ्चकार। तेषां हैकैकस्मान्मुष्टिमाददे। सहोवाच भरद्वाजेत्यागमन्त्य-वेदा वा एते। अनन्ता वै वेदाः। एतद्वा एतैस्त्रिभिरायुर्भिरल्ववोचथाः' इति।[1]

नहि इदानीमुपलभ्यमाना वेदा अनन्ताः सन्ति। तस्माद्विज्ञायते ''यत्किमपि तत्त्वान्तरमेव वेदपदव्यपदेश्यं यदनन्तं भवतीति'' उच्यते।

तन्न; 'भरद्वाजो ह' इत्यादिसमुद्घृतवचनविरोधात्, शब्दराश्यात्मकवेदाध्ययनार्थमेव ब्रह्मचर्यग्रहणविधिप्रसिद्धिभ्याम् । किञ्च 'अन्ववोचथा' इत्यनुवचनस्य शब्दराशिग्रहण एवाञ्जस्यम् । नहि तत्त्वान्तरस्य तत् सम्भवति। न चोपलभ्यमानस्य वेदस्यानन्त्यं नास्तीति वाच्यम्; देवर्ष्यादिग्राह्यस्य वेदस्यानन्त्ये बाधाभावात् । अद्यत्वे तु मानवबुद्धिग्राह्याणामपि सहस्राधिकशाखानां विपरिलोपो दृश्यते, महाभाष्यकारादिभिर्वेदस्य एकत्रिंशदुत्तरैकादृशशतशाखानां चर्चितत्वात् । देवादिबुद्धिग्राह्यास्तु वेदा अनन्ता एव। अत एव—

**'इन्द्रादयोऽपि यस्यान्तं न ययुः शब्दवारिधेः।'**

इति वचनं श्रूयते।

अपि च- अनन्तप्रपञ्चसृष्टेः ईश्वरज्ञानपूर्वकत्वेन तदनन्तरज्ञानेष्वनुविद्धानां शब्दानामप्यानन्त्यम् -

**'न सोऽस्ति प्रत्ययो लोके यः शब्दानुगममाहते।'**

इति अभियुक्तोक्तेः। अत एव ईश्वरीयनित्यानन्तज्ञानेषु अनुविद्धाः शब्दरूपा वेदा अपि नित्या अनन्ताश्चेति सर्वमनवद्यम् । अत एव च 'वेदैरेव ब्रह्मा सृष्टिं करोति।' इति श्रुतिस्मृतिषु, पुराणेषु, च प्रसिद्धिराजञ्जस्येनोपपद्यते। नात्र वेदशब्दव्यपदेश्यं किमपि तत्त्वान्तरं निर्दिष्टम्, 'वेदशब्देभ्यं एवादौ पृथक् संस्थाश्च निर्ममे', 'शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' इति 'शब्द' पदनिर्देशात् । अत एव 'भूरिति व्याहरत्, तस्माद्भुवमसृजत्' इत्यादिभिः शब्दव्याहरणपूर्विका सृष्टिः श्रूयते। यथा लोके कुलालो घटशब्देन घटं स्मृत्वा दण्डचक्रादि व्यापारेण तं सृजति तथैव परमेश्वरोऽपि तैस्तैः शब्दैस्तांस्तानर्थान् स्मृत्वा सृजति।

**<u>वेदेषु वैज्ञानिकार्थ-परीक्षणम्</u>** —

वेदानां स्वरूपं कीदृशम्? कश्च तदपरोक्षज्ञानोपायः? किं वा तत्फलमिति जिज्ञासायाम् अपौरुषेयो मन्त्रब्राह्मणात्मकः शब्दराशिरेव यद्यपि तत्स्वरूपम्, अविच्छिन्नपारम्पर्येण तदाभ्यासजन्यसंस्कारसमीचीनमनःसहकृतश्रोत्रेन्द्रियमेव तदापरोक्ष्यो-पायः, तदर्थज्ञानानुष्ठानसापेक्षस्य तदपरोक्षज्ञानस्य चतुर्वर्गफलप्राप्तिः फलञ्चेति प्रसिद्धमेव; तथापि नवीनाविष्कारप्रधानेऽस्मिन् युगे प्रसिद्धमपरोक्षमपि परित्यज्य किञ्चित् नवीनं वस्तु आविष्कृत्य प्रसिद्धा दृष्टिरपसारणीयेति कुतूहलवशादेव एतत्प्रश्नत्रयं समुदेति।

अत्र केचित् सङ्गिरन्ते-''प्रयत्नतत्त्वकोविदा विपश्चितः इतिहासदृष्ट्या प्राच्यसंस्कृतेर्गवेषणाया धीमन्तः तत्तत्सम्प्रदायशास्त्रादिभेदभिन्नाः सनातनधर्मानुसारिणः सर्वेऽपि महानुभावाः तदितरेऽपि विद्वांसो वेदानां महत्त्वं निखिलशास्त्राणामपेक्षया प्राचीनतमत्वञ्च मन्यमानास्तद्विषयकं विविधं समालोचनादिकं विदवति। अस्माकं यावन्तो धर्ममार्गाः यावञ्च वाङ्मयम्, सर्वमेव वेदानुप्राणितम् । यत्र स्थूलदृष्टिभिः साक्षाद् वेदाश्रितत्वं न संलक्ष्यते, तत्रापि परम्पराया द्वारद्वारिभावेन च वेदानां प्रभावः स्फुटमेव उन्नेतुं शक्यते इति विदुषां तत्तदर्थविवेककानां मभिमतम् । स्मृतिषु दर्शनेषु इतिहासपुराणेषु तन्त्रेषु तथा न्यत्रापि

---

* अतिथि प्राध्यापक, धर्मशास्त्र-मीमांसा विभाग, संस्कृतविद्या धर्मविज्ञानसंकाय, काशी हिन्दू विश्वविद्यालय, वाराणसी

शास्त्रेषु सर्वत्रैव वेदानुमतत्वेनैव सिद्धान्तविशेषस्य शिष्टेषु परिग्रहः समादरश्च भवतीति दृश्यते।'' तत्सत्यम्; सर्वमेतत्प्रसिद्धमेव वेदमाश्रित्य सङ्गच्छते।

यदपि तैः- ''वस्तुतस्तु लौकिकदृष्ट्या समुच्छिन्नप्रायोऽप्ययं नैकान्ततो बहुश्रुतानां पण्डितानामगोचरः। कियन्तो वेदाः कियत्यस्तेषां शाखाः कानि वा तेषामङ्गानि, उपाङ्गानि च। तत्रापि के तावद् ग्रन्था मुद्रिता अमुद्रिता वा समुलभ्यन्ते। के पुनर्लुप्ताः सर्वमेतत् न्यूनाधिकतया विदुषां सुविदितमेव। वेदानुशीलनकर्शितमतयः पाश्चात्त्यपण्डिताः स्वदेशेष्वपि केचन तादृशमेवासामर्थ्यं कृतविद्या भृशमन्वेषणतत्परा वेदेभ्यो भाषावत्त्वं शब्दतत्त्वमाख्यानादिकम् सामाजिकं दार्शनिकम् ऐतिहासिकं भौगोलिकञ्च तथ्यं जलधिभ्यो मथ्यमानेभ्यो रत्नखण्डानीव आविष्कुर्वन्तः स्वस्वप्रतिभामनतिक्रम्य, वेदज्ञानय समृद्धिं सम्पादयन्तीत्यतिरोहितं विशेषज्ञानाम् । वेदानां नित्यत्वमनित्यत्वं वा, पौरुषेयत्वमपौरुषेयत्वं वा, इत्यपि दार्शनिकैः स्वस्वसिद्धान्तानुगुणाभिर्युक्तिभिस्तत्र तत्र विवेचितम्। वेदप्रामाण्ये विप्रतिपिन्नानां सौगतानामार्हतानाञ्च युक्तीरपाकुर्वद्भिराचार्यैस्त-त्प्रामाण्यस्थापने प्रयत्नः कृत एव'' इत्यभाणि। तदपि सत्यम्; एतदपि प्रसिद्धमेव वेदं गमयति, अप्रसिद्धे विप्रतिपत्त्याद्यसम्भवात् सर्व ज्ञानं धर्मिण्यभ्रान्तम्, प्रकारे तु विपर्यय इति न्यायात्।

यदपि तैः प्रतिपादितम् - ''निरुक्तकृतां कालेऽपि वेदार्थनिर्णये पण्डितानां भूयान् मतभेद आसीत् । तदुत्तरकालिकेषु वेदार्थनिर्वचनपरेषु रावण-हरिस्वामि-स्कन्दस्वामि-सायणोव्वट-महीधराद्याचार्येष्वपि तद्रूपमेव मतवैषम्यं लक्ष्यते'' इति। तदपि अकिञ्चित्करम्; वेदार्थविषयकमतभेदस्य वेदस्वरूप-भेद-तदज्ञानाप्रयोजकत्वात्।

यद्यपि प्रसिद्धेभ्यो वेदेभ्य वास्तविकवेदबुद्धिनिरासायोक्तम्— ''निखिलमिदं वाङ्मयं कण्ठे धारयतोऽपि वेदार्थमर्यग्रहणे यादृशं छायासु वस्तुत्वमारोपसतां छायाभ्यो वस्तुतत्त्वनिरूपणपराणां वस्तुस्वरूपविषये परिदृश्यते। प्रतिबिम्बतफलेभ्यो यथा वास्तविक-फलाम्वादनजातृप्तिः क्षुन्निवृत्तिश्च न संभवति, तथा वैखरीवागात्मकेभ्य ऋगादिमन्त्रेभ्यो वेदत्वेन लोके प्रसिद्धेभ्योऽपि साक्षादेव दैवीवाक्संराधनजममृतत्वं सर्वज्ञत्वादिकञ्च नोपज्ञभ्यते'' इति। तदपि नाकिञ्चित्; अनुक्तोपालम्भात् । अनुक्तोपालम्भनमेतत् - नहि कण्ठे धारणमात्रादमृतत्वं सर्वज्ञत्वादिकञ्च वेदे कुत्रचिदुक्तम्। किन्तु वेदार्थग्रहणानुष्ठानसापेक्षस्यैव कण्ठे धृतस्य वेदस्य तत्तत्पुरुषार्थसाधकस्यं श्रूतम्।

यत्तु-''तत्राध्ययनमात्रेण घृतकुल्या-पयःकुल्यादि-फलश्रवणम्, अश्वमेधाध्ययन-मात्रेण अश्वमेधफलप्राप्तिश्रवणात्' इति। तदपि धर्मज्ञानानुष्ठानाश्वमेधोपासनफलपरमिति सायणीये ऋग्वेदीयभाष्योपोद्धाते स्पष्टमेव। तथा हि, सायणाचार्येण प्रकृतप्रसङ्गे मीमांसोपन्यस्ता-'दर्शपूर्णामासयोर्वेदविमर्शनं प्रकृत्य श्रूयते- 'आस्य प्रजायां वाजी जायते य एवं वेद।' 'पूर्णाहुत्या सर्वान् कामानवाप्नोति' 'पशवधयाजी सर्वान लोकान् जयति' तरति मृत्यम्, तरति पाप्मानम्, तरति ब्रह्महत्यां योऽश्वमेधेन यजते य उ चैनं वेद।' अग्न्याधेयपूर्णाहुत्या सर्वकामप्राप्तेरग्निहोत्रादीन्युत्तरकालीनान्यनर्थकान्येव स्युः। तथा निरूढपशुबन्धानुष्ठानेन सर्वलोकाभिजयात् ज्योतिष्टोमादीनामानर्थक्यमेव स्यात् । एवमेव अध्ययनकालीनेनैव अश्वमेधवेदनेन ब्रह्महत्यादितरणात् तदनुष्ठानं व्यर्थमेव स्यात् ? एवं पूर्वपक्षस्य समाहितम् - पूर्णाहुतिं जुहुयादि'त्यस्य विधेः शेषोऽयमर्थवादः। सर्वकामावाप्तिहेतुत्वात् प्रशस्तेयमाहुतिः। यथा सर्वे ब्राह्मणा भोजयितव्य इत्यत्र सर्वत्वं स्वगृहागतब्राह्मणविषयम् एवं पूर्णाहत्या कर्मसाङ्गत्वम् । यत्फलं तस्मिन्नधिकारे प्रस्तावे सम्भावितं तद्विषयकमेव सर्वत्वं द्रष्टव्यम् । पूर्णाहुतेरभावे सत्याधानरूपं कर्माङ्गं विफलं भवति। तच्च वैकल्पं पूर्णाहुत्या समाधीयते- इत्येकः कामः, तस्मिन् समाहिते सति आहवनीयाद्यग्नयो अग्निहोत्रादिकर्मसु योग्या भवन्ति इत्यन्यः कामः। तैश्च कर्मभिस्तत्तत्फलं भवतीति कामान्तरम्।

नन्वीदृशी सर्वकामावाप्तिराहुत्यन्तरेष्वपि विद्यत इति चेत् ? भवतु, तथापि पूर्णाहुतिस्तुर्तेर्न काचिद्धानिः।

पृथिव्यादीनां फलानां कर्मान्तरेण परिणामाधिक्यं सारत्वं वा सम्पाद्यते, ततः फलविशेषः स्यात् । यथा निष्केण वस्त्रमात्रमुपलभ्यते, निष्कद्वयेन तु सारभूतं दुकूलम्, तथैव ब्रह्महत्याया अपि मानस्या मनःकृतायाः स्वल्पाया वेदनमात्रेण तरणम्, कायिक्यास्तु महत्या अश्वमेधेनेति नानुष्ठानानर्थक्यम् ।

**वेदे ऐतिहासिकघटनादि विचारः —**

यदुक्तम् - ''पौराणिकभुवनकोशवर्णनप्रसङ्गे इतिहासादिप्रसङ्गे च पुराणटीकाकारैः औदासीन्यं प्रदर्शितम् एवं विकाशवादादीनि विज्ञानानि भूस्तरविद्यादयश्च तैरुपेक्षिता'' इति। तदपिन न; श्रीधर-नील-कण्ठादिभिः यथाप्रमाणं भुवनकोशाद्यु पवर्णनात् । सर्वथा आधुनिक विज्ञानानुसारेण पुराणादिव्याख्यानस्न्तु उपहासास्पदमेव-केनचिद् व्याख्यात्रा तरुतारमिति वाक्येन यथा तन्त्रीविज्ञानं साधितं तद्वत् । निरुक्तकृतो विज्ञानानुसारि-वेदार्थाख्यानन्तु दुर्गाचार्यादिभिः स्पष्टीकृतमेव।

यदप्युक्तम् - ''इतिहाससम्बन्धे ततोऽप्यधिको विप्लवः, वेदाना मपौरुषेयत्वं समर्थयमानेन भगवता जैमिनिना 'अनित्यदर्शनाच्च' इति पौरुषेयता-पूर्वपक्षमुद्भाव्य 'परन्तु श्रुतिसामान्यमात्रम्' इति समाहितम् । जैमिनेर्भगवतः क आशय इति तु वेत्ति सर्वान्तर्यामी। अनेकाधा स विवरीतुं शक्यते, च बहुभिः। पर श्रीशबरस्वामिप्रभृतयो मीमांसाका इत्थं वर्णयन्ति यन्मनुष्या यदि वेदेषु वर्ण्यन्ते तर्हि वेदास्तन्मनुष्यादुत्तरं प्रादुर्भूता इत्यनादित्वमपौरुषेयत्वञ्च वेदानां भज्येतेति शङ्का।

न सन्त्येव मानुषाणि चरितानि। नामसादृश्यमूलयातु भ्रान्त्या नित्यपदार्थसम्बन्धिवर्णनं मानुषमित्यभिमन्यते कैश्चित् यथा 'बबरः

प्रावाहणिरकामत' इत्यादिषु 'बब' इति शब्दानुकृत्या वायुरभिधीयते, स च प्रवहणीशल इति प्रावाहणिरुक्तः। अत्र प्रवहणपुत्रो बबरनामा कश्चिन्मनुष्यो भवत्, तद्वितिहासभ्रान्तिः लोकानां जायते। वस्तुतस्तु वाय्वादेर्नित्यस्यैवेदं वर्णनमिति तस्मानधानश्चेति।

एतेन "मनुष्येतिहासो वेदेषु नास्त्येवेति मतं बहुभिरेवेदानी मादृतम्, अनूदितञ्च" इति। तदपि न किञ्चित; यतो जैमिनिना नान्तर्याम्यर्थ सूत्रं रचितम्, किन्तु वाक्यशास्त्राधिकारिणां कृते। अतः शबरस्वाम्यादिभिरेव तद्धृतयं निवेदितम् । श्रीशङ्करभगवत्पादाः 'शास्त्रतात्पर्यविदः' इति सबहुमानं श्रीशबरस्वामिनः स्मरन्ति। तद्विपरीतविवरणन्तु सूत्राननुसार्येव। सूत्राक्षराणि च स्वारस्येन अस्मिन्नेवार्थे सङ्गतानि। अवश्यं वेदशब्दानामितिहासानुसारित्वे पौरुषेयत्व-सादित्वदिना अपौरुषेयत्वहान्या प्रामाण्यस्वतस्त्वं वेदानां भज्यते। उत्तरमीमांसकाश्चाप्यत्र संवदन्ते। 'अत एव च नित्यत्वम्, शब्द इति चेन्नातः प्रभवात् प्रत्यक्षानुमानाभ्याम्' इत्यादिभिस्तदुक्तमेव।

घटनाऽननुसारित्वमेव वैदिकशब्दानां वैशेष्यम्। शब्दानुसारिण्यस्तु घटना भवन्त्यो न वार्यन्ते, सृष्टेः शब्दपूर्वकत्वनिर्णयात् । अत एव प्रमाणान्तराविरुद्धा अनादित्वाऽपौरुषेयत्वाप्रतिरोधिकाश्च घटनाबोधिका आख्यायिका भूतार्थवादिन्य सत्यो भवन्त्वितिहासरूपाः, परन्तु प्रमाणान्तरविरुद्धा अनादित्वविरोधिन्यस्तु ता गुणवादिन्य एव। गुणवादिन्योऽपि इतिहासवदेव व्याख्यायन्ते। न च तावता पूर्वोक्त-मीमांसा-सिद्धान्तविरोधः।

अत एव "इमां पद्धतिमवलम्ब्य मीमांसकाभिमतस्य मन्त्र-ब्राह्मणात्मकस्य कृत्स्नस्य वेदस्य प्रामाणिकी व्याख्या न केनाप्यद्यावधि कृता" इत्यपि निर्मूलम्। उक्तीत्यैव सायणादिभिर्व्याख्यातमित्युक्तवात्। नहि बबर-शब्दव्याख्यानवदेव तदनुसारिव्याख्यानम्, मानुषादि चरिताननुसरिणो वैदिकाः शब्दा इत्येव मीमांसकमतम्। तदनुसार्येण सर्वमपि आस्तिककृत-वेदव्याख्यानम्।

यदुक्तम् - "सायण-माधवाचार्यौ सादरमुपोद्घाते मीमांसकमतमिदमन्व वदताम्, परं व्याख्यानकाले त्विदं सर्वं व्यस्मरतामिव, यतो बहवो मन्त्रा बहूनि च ब्राह्मणानि मानुषेतिहासावलबनेनैव तत्र भवद्भ्यां व्याख्यातानि। यथा- 'आभोगयं प्रयाहि गच्छन्त्र ऐतना...... इति मन्त्रं व्याचक्षाणो माधवाचार्य आह-ऋभवो हि सुधन्वनः अङ्गिरसस्य पुत्राः, कुत्सोऽप्याङ्गिरसः, अतस्तेन मदीया ज्ञातयः इत्युक्तम् । हे सौधन्वनासः सुधन्वनः पुत्राः। एवेव 'भ्रातारत्रं प्र तरित्वा दधाति' इत्यत्रापि माधवाचार्यः दीर्घतमः कक्षीवतोः सर्वमितिहासं भावव्यपुत्रेण स्वनयेन यद्यद्वत्तं तस्य विवरणञ्च सर्वमुपबध्नाति। तदेव तत्र वृत्तमलम्ब्य सूत्रमिदं व्याचष्टे" इत्यादि।

तदपि न पूर्वोक्तसिद्धान्तप्रतिकूलात्; ताच्चरितानुसारिमन्त्रनिर्माण मित्यस्यार्थस्य तद् व्याख्यानेन सिद्धेः। भवन्मतरीत्याऽपि मन्त्रार्थ-तज्ज्ञानयोः ईश्वरप्रसादलभ्यत्वम्। मानुषादिचरितानाम अनित्यत्वे कथं तत्र मन्त्रार्थता घटते? कुतो वा वृत्ततज्ज्ञानयोरीश्वरप्रसादलभ्यत्वम्? यथाकथञ्चित्तु सर्वस्यैव वृत्त-ज्ञानादेरीश्वरप्रसादजत्वमेवेति मन्त्रार्थज्ञानयोः किं वैलक्षण्यम्? एवमेव हरिश्चन्द्रोर्वशीपुरूरवादि-कथावर्णनमपि नाऽनादित्वाऽपौरुषेयत्वादिविरोधि तद्बोधक-मन्त्रब्राह्मणादीनां ततद्घटनाननुसारित्वादेव। मन्त्रादिशब्दानुसारिण्यो भवन्त्यस्तु घटना न वार्यन्ते, वेदापौरुषेयत्वाविरुद्धत्वादेव इत्युक्तमेव।

यदुक्तम्- "उपनिषत्सु उपलभ्यमाना आख्यायिका मनुष्यपरतयैव श्रीशङ्कराचार्यप्रभृतिभिः सर्वैः भाष्यकृद्भिः व्याख्याता, 'शुगस्य तदनादरश्रवणात् तदाद्रववणात् सूच्यते हि, क्षत्रियत्वावगतेश्चोत्तररत्र चैत्ररथेन लिङ्गात्'[2] इत्यपशूद्राधिकरणे। भगवता व्यासेनैव मनुष्यख्यानमभिमतमि"ति। तदपि न किञ्चित; श्रीशङ्कराचार्यैः तादृगाख्यानानां सुखावबोधार्थमाख्यानमात्रपरत्व अनेकत्र उक्तात्वात् । तत्रैव प्रमाणान्तराविरोधे भूतार्थवादरूपत्वेन इतिहासत्वमपि सङ्गच्छते। अत एव बृहदारण्यकोपिनषदि इतिहास-पुराणमित्यत्र उर्वशी-पुरुरवसोः संवादादि 'उर्वशी ह्यप्सरा' इत्यादि ब्रह्माणमेवेत्युक्तम् । तदभिप्रायेणैव वैयासिकमपशूद्राधिकरणसूत्रमपि सङ्गच्छते। न च तावताऽपि लौकिकेतिहासवद् घटनानुसारित्वं संभवति। 'अत एव च नित्यत्वमि'ति विरोधाद् अन्यथोपपत्तेश्च । एवम् -

**'भूतं भवद्भविष्यच्च सर्व वेदात् प्रसिद्ध्यति।'**

इति मनुवचनमपि उक्तसिद्धान्तानुसारेणैव उपपद्यते। न च घटनानुसारीतिहासवर्णने तत् सङ्गच्छेत; अन्यथा अपौरुषेयत्वाद्यनुपपत्तेः।

यदप्युक्तम्- "न कदाचिदनीदृशं जगत् इत्यभिमन्यमानां मीमांसकानामनया युक्त्या अपौरुषेयत्वरक्षणं स्यादपि। अन्येषां तु सर्गप्रलयप्रवाहमुररीकुर्वतां दार्शनिकानां पौराणिकानाञ्चैते वर्तमानकल्पसम्बन्धिनः पृथिव्यादिपदार्थाश्च अप्यादिमन्तः इति वर्णनेऽपि वेदानामनादित्वभङ्गशङ्कातङ्को दुस्तर एव। प्रवाहरूपेण नित्यता तु पृथिव्यादीनामिव देवर्षि-पितृ-राजर्षिप्रभृतीनामपि पौराणिका अभ्युपगच्छन्त्येवेति पक्षद्वयेऽपि साम्येन इतिहासविलोपपक्षस्य प्रयोजनं न पश्याम" इति। तन्न; सृष्टिप्रलयाङ्गीकर्तृणां वेदान्तिमीमांसकानामपि प्रमाणान्तरेणार्थमुपलभ्य विरचितत्व-प्रथमोच्चरितत्व-पूर्वानुपूर्वीनिरपेक्षोच्चारणविषयत्वादिरूप-पौरूषेयत्वाभावेन तदपौरुषेयत्वसिद्धेः। नियतानुपूर्वीतत्तत्संस्कारवन्मायावदीश्वरे नियतानुपूर्वीविशिष्टानां वेदानां सम्प्रदायाविच्छेदस्य अभ्युपगम्यत् पौरुषयेणां पुराणादीनामपि यद्यपि पृथिव्यादीनामिव प्रवाहरूपेण नित्यत्वम् ; तथापि तत्र अर्थनित्यत्वेऽपि आनुपूर्वीनैयत्याभावात् पौरुषेयत्वम्। वेदे तु प्रतिकल्पम् अश्वमेधब्रह्मवधादीनाम्

इष्टानिष्टजनकत्वनैयत्वयद् आनुपूर्वीनैयत्वस्यापि सत्त्वेनापौरुषेयत्वम तदुक्तं भामतीकृता—

'अनाद्यविद्योपधानलब्धसर्वशक्तिज्ञानस्यापि परमात्मनो नित्यस्य वेदानां योनेरपि न तेषु स्वातन्त्र्यम्, पूर्वपूर्वसर्गानुसारेण तादृशतादृशानुपूर्वीविरचनात् । यथा यागादिब्रह्महत्यादयोऽर्था-नर्थहेतवो ब्रह्मविवर्ता अपि न सर्गान्तरे विपरीयन्ते। नहि जातु क्वचित् सर्गे ब्रह्महत्याऽर्थहेतुरनर्थहेतुश्च अश्वमेधो भवति, अग्निर्वा क्लेदयति आपो वा दहन्ति तद्वत् । यथाऽत्र सर्गे नियतानुपूर्वव्यं वेदाध्ययनमभ्युदयनिःश्रेयसहेतुः, अन्यथा तदेव वाग्यज्ञतयाऽ-नर्थहेतुः, एवं सर्गान्तरेऽपि तदनुरोधात् सर्वज्ञोऽपि सर्वशक्तिरपि पूर्वपूर्वसर्गानुसारेण वेदान् विरच यन्न स्वतन्त्रः। पुरुषास्वातन्त्र्यमात्रं चापौरुषेयत्वं रोचयन्ते जैमिनीया अपि। तच्च अस्माकमपि समानम्, अन्यत्राभिनिवेशात्' इति।[3]

एतेन मन्त्रेषु ब्राह्मणेषु च तास्ता आख्यायिका इतिहासाश्च वेदापौरुषयेयत्वाविरोधिनो ग्राह्या एव। तदभिप्रायेणैव सायणादीनां यथाश्रुतार्थव्याख्यानम्, एकत्र निर्दिष्टस्य सिद्धान्तस्य सर्वत्र योजयितुं शक्यत्वात्। एतेन निरुक्ते (अ0-2)- 'अष्टोगो होत्रमृषिर्निषीदन् देवापि देवसुमति चिकित्वात्' इत्यादिषु देवापि-शन्तनु-प्रभृतीनां चरितं तत्तन्मन्त्रनिदानत्वेन प्रस्तौति वृहद्देवताकृत् शौनकोऽपि बहूनामृषीणां चरितानि मन्त्रनिदानत्वेन बृहद्देवतायां स्पष्टमाचष्टे इत्यादिकमपि समाहितमेव।

यत्तु- ''वेदेषु सर्वयेतिहासानभ्युपगमे महान् विप्लवः स्यात्, वेदेषु ऊर्वशी-पुरूरवो-हरिश्चन्द्रप्रभृतीनां बहव इतिहासाः। ते च पुराणेष्वपि उपबृंहिताः। ततश्च वेदेषु ते यथाऽन्यपराः पुराणेष्वपि ते तथैव व सम्भाव्यन्ते। तथा च तद्धटितपौराणिकराजवंशस्य ऐतिहासिकं तथ्यं दूरोत्सारितं स्यात् । ततश्च 'नास्त्येव भारतीयानां कोऽपि इतिहासः। कल्पनामात्रसाराः पौराणिका इतिहासाः। नासीत् कोऽपि रामो युधिष्ठिरो वा' इत्यादिपाश्चात्यानाममनर्गला कल्पना एव विजयन्ते। तथा गुहायां दृढदत्तार्गलञ्च भारतीयसभ्यतायास्तत्त्वं स्यात् । कुतश्च श्रीशबरस्वामि उपबृंहितं मतमेव प्रमाणीकुर्वीमहि? न तु शौनक-यास्क-शङ्कर-माधवादिभिः स्वीकृतवेदेषु स्फुटं भासानं स्वारसिकसिद्धान्तम्'' इति।

तदपि निस्सारमेव; मामतीप्रदर्शितरीत्या पूर्वोत्तरमीमांसाकाना मुक्तार्थे विरोधाभावस्य उक्तत्वात्। शौनक-यास्कादीनामपि मतं तदनुगुणमेव, दुर्गाचार्यैस्तत्र तत्र तथैव व्याख्यातत्वात्। 'यत्परः शब्दः स शब्दार्थः, इति न केवलं पूर्वमीमांसाकमतम्, उत्तरमीमांसकैरपि तथैवाभ्युपगमात्। वेदार्थविचारे वाक्य-शास्त्ररूपयोः पूर्वोत्तरमीमांसयोरेव परमादर आवश्यकः। मीमांसानिर्णीतार्थस्यैव पुराणेतिहासादिषु प्रतिपादितत्वात्।

## सन्दर्भ सूची

1. तैत्तिरीय ब्राह्मणम्— 3/10/11/3-4.
2. ब्रह्मसूत्रे 1।3।34,35
3. भामतीकारः।

●

# न्यायवैशेषिकदर्शनसम्मतं शब्दस्य प्रत्यग्राह्यत्वस्वरूपम्

*शारदा मुखर्जी* *एवं सरोज कुमार पाढ़ी* **

अस्माकं दैनन्दिनजीवने शब्दस्य बह्व्यः उयोगिताः वर्तन्ते। यतोहि शब्दमाध्यमेनैव अस्माभिः मनसि निहितः भावः प्रकाश्यते। शब्द अयं बह्वर्थवाची भवति। न्यायदर्शने शब्दः किमर्थम् अवश्यस्वीकार्यमिति चेत्, आस्तिकत्वात्। भारतीयदर्शनस्य भेदद्वयं वर्तते - आस्तिकं नास्तिकञ्चेति। आस्तिकः इत्यनेन सः सम्प्रदायः बोध्यते यः वेदस्य प्रामाण्यं स्वीकरोति, स्वस्य मतं परिपुष्टाय श्रुतिवाक्यानाम् अध्याहाराश्च करोति। एवं विधेषु आस्तिकदर्शनसम्प्रदायेषु न्यायदर्शनम् एकम्। अनेन न्यायदर्शनेन स्वीकृतेषु चतुर्षु प्रमाणेषु शब्दप्रमाणम् अन्यतमम्। मीमांसकः शब्दं नित्यविभुद्रव्यरूपेण स्वीकरोति। न्यायवैशेषिकौ तु शब्दः आकाशस्य गुणरूपेण स्वीकुरुतः। वैयाकरणाः तु शब्दः आकाशस्य गुणरूपेण स्वीकरणात् परमपि अर्थबोधकशब्दरूपेण स्फोटात्मकरूपेपापि स्वीकुर्वन्ति। अपि च परापश्यन्तीमध्यमावैखरीभेदेन शब्दः चतुर्धा विभज्यते। न्यायदर्शने तु मूलतः शब्दः गुणरूपेण गृह्यते। गुणाः चतुर्विंशतिः भवन्ति। तेषु चतुर्विंशतिगुणेषु अन्यतमेकः शब्दः। तद्यथा-

''**रूपरसगन्धस्पर्शसंख्या-परिमाणपृथकृत्वसंयोगविभागपरत्वापरत्वगुरूत्वद्रवत्वस्नेहशब्द-बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माऽधर्मसंस्काराश्चतुर्विंशतिर्गुणाः॥**''[1]

अनया पंक्त्या तु उद्देशः क्रियते। अधुना लक्षणपरोक्षे कर्तव्ये। तद्यथा भाष्यकारेण वात्स्यायणेन

''**त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः। उद्देशलक्षणपरीक्षा चेति।**''[2] इदानीं शब्दस्य लक्षणविषये प्राप्यते-

''**श्रोत्रग्राह्यः गुणः शब्दः।**''[3]

अर्थात् श्रोत्रेन्द्रियेण यस्य प्रत्यक्षं भवति सैव गुणः शब्दः। शब्दत्वेऽव्याप्तिवारणाय गुण इति पदं प्रयुक्तं शब्दस्य लक्षणे। रूपादौ गुणे अतिव्याप्तिवारणाय च श्रोत्रग्राह्य इति पदं प्रयुक्तम् । यतो हि गुणत्वात् अपि रूपादिषु श्रोत्रग्राह्यत्वं न वर्तते।

ननु शब्दस्यास्य प्रत्यक्षं कथं भवति? भवति न वेति? चतुर्विंशतिगुणेषु केचन प्रत्यक्षग्राह्याः, केचन तु प्रत्यक्षाग्राह्याः भवन्ति इति। प्रसिद्धा पंक्तिः वर्तते- योग्यविभुविशेषगुणानां स्वोत्तरत्पन्नगुणनाशत्वनियमात् । विभुद्रव्याणां भेदद्वयं वर्तते- विशेषः सामान्यञ्चेति। विभुविशेषगुणाः पुनर्द्विविधाः- प्रत्यक्षग्राह्यः, प्रत्यक्षाग्राह्यः इति।

श्रोत्रेन्द्रियेण यस्य गुणस्य प्रत्यक्षं भवति न तु केवलं तत् अपि तु श्रोत्रेन्द्रियेण यस्य प्रत्यक्षयोग्यता सिद्ध्यति सः शब्दः। यतो हि भेर्यादिदेशावच्छेदे आकाशे यः शब्दः उत्पद्यते सः श्रोत्रग्राह्यः न भवति, तस्य श्रावणप्रत्यक्षं न भवति। किन्तु सोऽपि शब्दः। तस्मात् केवलं प्रत्यक्षं नापि तु प्रत्यक्षयोग्य इति कथनीयम् । अत्र योग्यता पदेन शब्दत्वं जातिमत्त्वं प्रकाशितम्। शब्दप्रत्यक्षस्य कारणं शब्दः। तस्य कारणतावच्छेदकं तु शब्दत्वम्। अतः तस्मिन् शब्दे शब्दप्रत्यक्षनिष्ठकार्यतानिरूपितकारणतावच्छेदकत्वस्य वर्तमानत्वात् शब्दत्वे प्रत्यक्षयोग्यता अपि वर्तते। शब्दोऽयं द्विप्रकारेण विभज्यते- पदं वाक्यश्च।

''**पदज्ञानन्तु करणं द्वारं तत्र पदार्थधीः।**

**शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥**''[4]

शब्दशक्तिरिति पदम्। वाक्यश्च शब्दप्रमाणमिति। वर्णानां समष्टिः एव पदम्। शक्तिस्तु पदे विद्यते, न तु वर्णे।

पुनः शब्दः द्विविधः - ध्वनिः वर्णश्च। मृदङ्गादिषु उत्पन्नाः शब्दाः ध्वन्यात्मकाः। ध्वन्यात्मकशब्दानाम् अर्थः न भवति। अपरस्तु कण्ठसंयोगेभ्यः उत्पन्नाः अ, आ इत्यादयः वर्णाः, वर्णघटितपदाः, पदघटितवाक्याश्च वर्णात्मकशब्दाः इत्युच्यते।

''**मृदङ्गादिभवो ध्वनिः॥**

**कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः॥**''[5]

सर्वे शब्दाः अनित्याः आकाशवृत्तयः च। आकाशे शब्दः समवायसम्बन्धेन उत्पद्यते- ''**नभोवृत्तिराकाशसमवेतः**''।[6] असमवायिकारणं तु मुखादिना सह आकाशस्य संयोगः, निमित्तं च इच्छाप्रयत्नादयः भवति, प्रयत्ने सति उदरस्थवायुः उर्ध्वगामी भूत्वा कण्ठताल्वादिना सह संयुक्तः भवति। एवं संयुक्ते सति मुखप्रदेशावच्छिन्ने आकाशे शब्दः उत्पद्यते।

शब्दः एषः पुनः त्रिविधः - संयोगजन्यः, विभागजन्यः शब्दजन्यश्च। भेरीसहितदण्डसंयोगात् भेरीदेशावच्छिन्ने आकाशे यः शब्दः उत्पद्यते सः संयोगजन्यः। दण्डस्य विभागसमये उत्पन्नः शब्दः विभागजन्यशब्दः। तत् तत् स्थाने शब्दोत्पत्तिम् आरभ्य वीचीतरङ्गन्यायेन पुनः श्रोतुः श्रोत्रदेशे यः शब्दः उत्पद्यते सः शब्दः शब्दजन्यः। यथा- नद्यां पाषाणस्य क्षेपणत्वात् तरङ्गस्योत्पत्तिर्भवति। तस्मात् तरङ्गात् अपरस्य तरङ्गस्य ततः अपरस्य, एवं बहूनां तरङ्गानाम्

* शोधच्छात्रा, वैदिक दर्शन विभाग, काशी हिन्दू विश्वविद्यालय, वाराणसी

** एसोसिएट प्रोफेसर, वैदिक दर्शन विभाग, काशी हिन्दू विश्वविद्यालय, वाराणसी

उत्पत्तिर्भवति। एषः वीचीतरङ्गन्याय इत्यनेन शब्देनोच्यते अत्र तु शङ्का जायते, तरङ्गात् तरङ्गस्योत्पत्तिर्भवति। किन्तु कथं भेर्यादौ देशे उत्पन्नः शब्दः श्रोतुः श्रोत्रदेशे आगच्छति इति। किं शब्दः श्रोत्रदेशे आगच्छति उत श्रोता एव शब्दस्य समीपं गच्छति एषोऽपि प्रश्नः जायते। यदि उच्यते शब्दः आगच्छति, यतो हि श्रोता भेर्यादौ देशे न गच्छति इति तु प्रत्यक्षसिद्धः। तस्मात् शब्दः एव श्रोतुः कर्णशष्कुल्यावच्छिन्नाकाशे आगच्छति। किन्तु किं शब्दस्य आगमनस्य सामर्थ्यम् अस्ति इति उच्यते चेत्, न। शब्दस्य गमनागमनस्य सामर्थ्यं नास्ति गुणत्वात्। उदयनाचार्येणापि उक्तम् –

**''वासनासंक्रमो नास्ति।''**[7]

वासना नाम गुणविशेषः, तस्य संचारः गतिरिति नास्ति। तदानीमुच्यते सत्यं, शब्दः तु श्रोतुः श्रोत्रदेशे न गच्छति। अपि तु वक्तुः मुखविवरावच्छिन्ने आकाशे उत्पन्नः शब्दः अपरं शब्दमुत्पादयति, स्वयं च विनश्यति।

एवं वक्तुः मुखविवरावच्छिन्ने आकाशे उत्पन्नात् शब्दात्, अपरशब्दस्य, ततः अन्यस्य शब्दस्योत्पत्तिर्भवति यावत् श्रोतुः कर्णशष्कुल्यावच्छिन्नाकाशे शब्दः न जायते। शब्दस्य समानजातीयशब्दम् उत्पन्ने सामर्थ्यमस्ति। आकाशे परम्पराक्रमेण शब्दानां या धारा उत्पद्यते सः वीचीतरङ्गन्यायेन शब्दजन्यः शब्दः इत्युच्यते। तस्मादुच्यते-

**''सर्वः शब्दो नभोवृत्तिः श्रोत्रत्पन्नस्तु गृह्यते।**

**वीचीतरङ्गन्यायेन तदुत्पत्तिस्तु कीर्तिता॥''**[8]

अन्यथा कदम्बपुष्पस्य कठिनांशं परितः यथा कोरकः उत्पद्यते तद्वत् भेर्यादिदेशावच्छिन्नाकाशे यदा एकः शब्दः उत्पद्यते, तदा तस्य आश्रयीभूतमाकाशं परितः दशशब्दाः उत्पद्यन्ते। अनेन क्रमेण श्रोत्रदेशे या शब्दधारा उत्पद्यते, सः एव कदम्बकोरकन्यायेन शब्द-जनितः शब्द इत्युच्यते। न्यायवैशेषिकयोर्मते शब्दः अव्याप्यवृत्तिः। अर्थात् आकाशस्य एकप्रदेशावच्छेदे शब्दः तिष्ठति, अन्यप्रदेशावच्छेदे तु शब्दास्याभावः विद्यते। शब्दः तु तृतीयक्षणे नश्यते। प्रथमक्षणे शब्दः उत्पद्यते, तदनन्तरं द्वितीयक्षणस्थशब्देन प्रथमक्षणस्थस्य शब्दस्य नाशः भवति। अस्याशयः यथा, शब्दः स्वोत्तरवर्तीशब्देन विनश्यति, 'योग्यविभुविशेषगुणानां स्वोत्तरवर्तीनाशनियमात्।' अन्तिमशब्दः तु तस्य पूर्ववर्तीशब्देन उत्पद्यते, द्वितीयक्षणे च विनश्यति। न्यायवैशेषिकरीत्या एवं शब्दस्य प्रत्यक्षं भवति।

**सन्दर्भाः**

1. अन्नंभट्टः तर्कसंग्रहः व्याख्याकारः- आचार्य श्रीशेषराजशमरिग्मी प्रकाशकः- चौखम्बा सुरभारती प्रकाशनम् संस्करणम् – 2018, पृ०सं० 4
2. वात्स्यायणः, न्यायसूत्रवात्स्यायणभाष्यम् व्याख्याकारः - फणिभूषणतर्कवागीशः प्रकाशकः- पश्चिमबङ्गराज्यपुस्तकपर्षत्, कोलकाता-70001 संस्करणम् – 1981, सूत्र संख्या – 2/2/2
3. अन्नंभट्टः, तर्कसंग्रहः पृ०सं० – 19
4. विश्वनाथाचार्यः, न्यायसिद्धान्तमुक्तावली व्याख्याकारः- पञ्चाननभट्टाचार्यशास्त्री प्रकाशकः- पश्चिमबङ्गराज्यपुस्तकपर्षत्, कोलकाता 700073 संस्करणम् – 1970, कारिकासंख्या 81
5. तत्रैव, कारिकासंख्या – 164, 165
6. तत्रैव, मुक्तावली टीका
7. उदयनः, न्यायकुसुमाञ्जलि, व्याख्याकारः- आचार्यः विश्वेश्व प्रकाशकः - चौखम्बाविद्याभवनम् वाराणसी-221001, संस्करणम् – 201 कारिका संख्या (1/15)
8. विश्वनाथाचार्यः, कारिकावली कारिकासंख्या 165, 166

●

# चन्द्रस्पष्टीकरणे वैज्ञानिकसंस्काराणां विमर्शः

*डॉ. मधुसूदनमिश्रः**

ग्रहगणितपरम्परायां चन्द्रस्य महत्त्वपूर्णं सथानं विद्यते । वेदेषु चन्द्रः मनस्तत्त्वप्रधानकः आयुर्वेदे औषधाधीशः ज्योतिषशास्त्रे च नक्षत्राधीशः कथ्यते। ज्योतिषशास्त्रे **मान्दं कर्मैकमर्केन्द्वोरिति** सौरवचनेन चन्द्रस्पष्टीकरणे तथा च भास्करेण प्रोक्तं यत् **स्फुटौ रवीन्दू मृदुनैव वेद्याविति** वचनेन परिलक्षितो भवति यत् केवलं मन्दफलेन संस्कृतश्चन्द्रः स्फुटो भवति । परन्तु दृक्प्रत्ययानुरोधेन वर्तमानकाले एतन्न समीचीनतया सङ्घटते। केवलं मन्दफलेन संस्कृतश्चन्द्रः स्फुटो न भवतीति यन्त्रबलेन प्रत्यक्षतया ज्ञायते । चन्द्रस्य भूमेस्सन्निकटतमत्वाद् लघुपिण्डत्वाच्च ग्रहाणां गुरुत्वाकर्षणेन किं वा भूमेश्चाकर्षणबलात् चन्द्रगतौ, स्थित्यां स्पष्टीकरणे च महदन्तरमुत्पद्यते। तत्र चन्द्रस्य परममन्दफलमानं 6 अंशाः 27 कलाप्रमितमस्ति। परं मध्यमस्पष्टचन्द्रयोरन्तरकारका अन्येऽपि हेतवः सन्ति यस्मात् सम्प्रति चन्द्रवेधेन मध्यमस्फुटचन्द्रयोरन्तरं कदाचित् $8^{0}30$ पर्यन्तमपि भवति। अतः स्पष्टचन्द्रसाधयितुं प्रायश्चत्वारिंशत्संस्काराणामावश्यकता विद्यते।[1] एषु मन्दफलसंस्कारो महत्तमः। चत्वारोऽन्येऽपि संस्काराः महत्त्वपूर्णाः अर्वाचीनसमुदाये स्वीकृतास्ते च—

(1) पाक्षिकसंस्कारः (Variation)/तिथिसंस्कारः

(2) च्युतिसंस्कारः (Evection)

(3) वार्षिकसमीकरणम्/वार्षिकसंस्कारः (Annual Equation)

(4) लम्बनीयसंस्कारः (Paralictic inequality)

मन्दफलातिरिच्य एतैश्चतुर्भिः संस्कारैः संस्कृतश्चन्द्रो स्पष्टतामेति, किञ्च तत्रापि यथाकाले केचन बीजसंस्काराः अपेक्षन्ते। अथ चन्द्रस्पष्टीकरणस्य विविधवैज्ञानिकसंस्काराणामैकेकं सैद्धान्तिकरीत्या परिशीलनं शोधपत्रेस्मिन् विधीयते ।

### 1.( क ) पाक्षिकसंस्कारविमर्शः( तिथिसंस्कारः ) *(Variation)*

अयं संस्कारः सूर्याकर्षणस्याधिक्याद् न्यूनत्वाच्चोत्पद्यते, सूर्यः कदाचिद् भुवमधिकमाकर्षति कदाचिच्चन्द्रमेवातः चन्द्रगतौ प्रतिपक्षे तिथिवशाद् विकार उत्पद्यते। यथा कृष्णाष्टम्यां चन्द्रो भुवं पृष्ठे विहाय सूर्यदिशि गमनप्रवृत्तो भवत्यतः, सूर्यस्याधिकतरमाकर्षणं चन्द्रे एव भवति। एतेनाकर्षणेन चन्द्रस्य तावत्पर्यन्तमधिकगतिः यावच्चन्द्रो रवेरतिसन्निकटं गच्छति। अर्थात् कृष्णाष्टमीतोऽमावस्यापर्यन्तं सूर्यस्याधिकतरमाकर्षणं चन्द्रे भवत्यतः चन्द्रगतिर्वर्धते।

किन्त्वमान्ताद् सूर्यसान्निध्यं विहाय चन्द्रः सूर्यात् विपरीतदिशि गच्छति तदा चन्द्रगतिः सूर्याकर्षणेन क्षीयते। इयं क्षीयमाना गतिः अमान्ताच्छुक्लाष्टमीपर्यन्तं भवति पुनः अष्टम्यनन्तरं चन्द्रो भुवं पृष्ठे विहायाग्रे गच्छति तदा सूर्यस्याधिकतरमाकर्षणं भुवि भवति, अतः तदा चन्द्रस्य वर्द्धमाना गतिः शुक्लाष्टमीतः पूर्णिमान्तं यावत् ततः पूर्णिमान्ततो कृष्णाष्टमीं यावच्चन्द्रगतिः क्षीयमाना च भवति। अर्थात् अमान्तपौर्णमास्योः रविः चन्द्रं भुवञ्च क्रमेणाधिकमाकर्षति, येन तदानीं भूचन्द्रकर्णोऽधिकः चन्द्रगतिश्च परमाधिका। तत्राष्टम्योरल्पतमा चन्द्रगतिः। अस्मादुत्पन्नः संस्कारः पाक्षिक इत्यभिधीयते। तत्र पक्षः संस्कारभ्रमणकाल इति। पाक्षिकसंस्कारोत्पत्तिहेतुभूत-कारणेनाष्टम्योश्चन्द्रस्य कक्षाधिकतरवक्रा भवति, पर्वणोश्चाल्पतरवक्रा। इदमन्यथाप्युपपाद्यते। भूचन्द्रकर्णीयशक्तिः = व/2 भवतीति शक्तिशास्त्रीयं सूत्रम्। अत्र व = चन्द्रवेगः र = भूचन्द्र-कर्णः। अत्र कर्णीयशक्तिदिषद्वैषम्येण स्थिरा भवतीति कृत्वा यदा वेगो महान् तदाकर्णोऽपि महान् भविता, कर्णमहत्वे चाल्पतरवक्रत्वम्। पर्वणोः कक्षायाः अल्पतरवक्रत्वम्। पर्वणोः कर्णीयशक्तेरल्पतमत्वं भवतीति हेतोः व/र इत्यस्य मानं अल्पम्। ततश्च कर्णस्य महत्त्वम्। तस्माच्चाल्प-तरवक्रत्वम्। पाक्षिकसंस्कारोऽष्टम्योः पर्वणोश्च शून्यो भवति, यदा व्यर्केन्दुः 45, 225 भागमितो भवति, तदा दीर्घवृत्तीयध्रुवकात् 35 कलामितोऽधिको भवति। पाक्षिकसंस्कारसंस्कृत-श्चन्द्रो यदा व्यर्केन्दुतो 135, 315 भागमितो भवति, तदा 35 कलामितो न्यूनो भवति। अतोऽस्य संस्कारस्य प्रमाणं (मध्यम चन्द्रः - स्पष्टरविः) इत्यनेन ज्ञायते। सूर्यचन्द्रयोरन्तरूपैव तिथिः, किञ्च तदवलम्बितोऽयं संस्कारः तिथिसंस्कारः पाक्षिकसंस्कारो वा निगद्यते।

अमायां पूर्णिमायाञ्च तिथिफलाभावात् पाक्षिकसंस्कारस्य शून्यत्वाच्चान्तरं नोत्पद्यते, संस्कारस्यास्य प्रयोजनञ्च न भवति। पाक्षिकसंस्कारस्य विवेचनं मुञ्जालाचार्येण 854 शके तदनु 932 ईस्वीये विहितं तत्तु टॉल्मी (Ptolmy) मतापेक्षया सूक्ष्मतरम्। लघुमानसे यथा प्रोक्तामाचार्येण—

**इन्दूच्चोनार्ककोटिघ्ना गत्यंशा विभवा विधोः।**

**गुणो व्यर्केन्दुदोः कोट्यो रूपपञ्चाप्तयोः क्रमात्।।**

**फले शशाङ्कतद्गत्यो लिप्ताद्ये स्वर्णयोर्वधे,**

**ऋणं चन्द्रे धनं भुक्तौ स्वर्णसाम्यवधेऽन्यथा।।**[2]

---

* असिस्टेन्ट प्रोफेसर, (सहायकाचार्यः, ज्योतिषविभागः), वेदवेदाङ्गसङ्कायः , सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी

आचार्यकेतकरेण केतकीग्रहगणिते षड्भाल्पे तिथिकेन्द्रे तिथिसंस्कारफलकलाः प्रोक्ताः। मेषादिषट्राशिके धनं 0,12,22,30,34,34,29,21,10; ऋणं 2,14,25,33,36, 36,32,24,13,0 तुलादिषट्के तिथिफलानि भवन्ति। तद्धि केतकीग्रहगणिते—

**धनं खं च सूर्या यमौष्ठाः खरामाः,समुद्राग्नयो वेदरामा नवौष्ठाः।**

**कुपक्षा दिशोऽथ क्षयो द्वे च शक्राः, शरौष्ठाः सुराः षड्गुणाः षड्गुणाश्च॥**

**रदा वेदपक्षास्त्रिचंद्रा वियच्च,कलास्तैथिका संस्कृतिस्स्याद्धिमांशोः।**

**इयं स्वर्णता मध्यमे व्यर्कचन्द्रे- ऽजषड्भे सति स्यात्तुलादौ विरुद्धा॥**[3]

आचार्यैः प्रोक्ताः येङ्कास्तत्र चतुर्थपञ्चमयोर्मध्यस्थोऽङ्को 34 भवति, अस्मदङ्कस्तु 35 कलायातीति स्वल्पान्तरात्सूत्रमुपपद्यते। एवं परिमलभाष्ये केतकराचार्येण निरूपितम्।अस्य विशदतया विवेचनं वेङ्कटेशतनयश्रीदत्तराजविरचितेन केतकीपरिमलेन केतकीग्रहगणितस्य परिमलवासानानामधेये स्वभाष्ये कृतम्। गणितीयरीत्या तत्र युग्मायुग्मपदयोर्मध्ये इदं तिथिफलं परमं 35 विकलात्मकं भवति। अयमेव तिथिसंस्कारः सिद्धान्तपरम्परायां प्रतिपाद्यते बुधैः।

### ( ख ) च्युतिसंस्कारविमर्शः ( तुङ्गान्तरसंस्कारः ) *(Evection)*

अयं संस्कारः सूर्यापेक्षया चन्द्रमन्दोच्चस्थितिमधिकृत्य भवति। यदि चन्द्र अष्टम्योरुच्चे गच्छति तदा तस्य विलम्बितस्योच्चप्राप्तिर्भवति, अर्थात्तत्र चन्द्रमन्दोच्चे रवेराकर्षणतो विकृति-र्जायते चन्द्रगतौ। द्वितीयोऽपि विकारः चन्द्रगतौ च्युतिवशेन भवति, यतो हि यदा चन्द्रः अमापौर्णमास्योरुच्चे गच्छति तदा च्युतिपर्रमा यदा चाष्टम्योरुच्चे गच्छति तदा च्युतिर्परमाल्पा भवति। तत्र परमाधिका च्युतिः 0.066 मिता परमाल्पा च्युतिश्च 0.044 मिता वर्तते। अत्र द्वयोर्विकारयोरेकीकरणेन ध्रुवके 77′ पर्यन्तमन्तरमापतति। च्युतिफलस्यावृत्तिकालः 31′ दिनानि भवन्ति। च्युतिफलज्ञानार्थं निम्नलिखितानां मानान्यपेक्षन्ते—

(1) नीचाच्चन्द्रस्य दूरत्वम्। (2) भुवः सूर्याद्दूरत्वम्।

(3) उत्केन्द्रितायाः परिवर्तनम्। (4) नीचभोगांशानां परिवर्तनम्।

अस्य संस्कारस्योच्चपरिवर्तनाधीनत्वात् अपरो नाम ''तुङ्गान्तर'' संस्कार इति वर्तते। नव्यैः च्युतिफलस्य महत्तमं मानम् 74′ कलाप्रमितं स्वीकृतं विद्यते, तच्च समीकरणम्—

आचार्यकेतकरेण ग्रहगणिते प्रतिपञ्चांशेषु च्यतुतिफलकलाः निर्धारिताः। अस्मिन् संस्कारे उच्चगणितस्यापेक्षता विद्यते।

तैस्तावत् = च्युतिकेन्द्रम् = 2 (चन्द्रः-सूर्यः)- चन्द्रमन्दकेन्द्रम्।

= 2चं-2सू-चं.+चन्द्रोच्चम्।

= च+चन्द्रोच्चं-2सूर्यः इति केन्द्रलक्षणम्।

अत्रापि समीकरणेन परमच्युतिफलमानं 74 कलाप्रमितं भवति। आचार्यकेतकरेण तु —

**खं विश्वे शरषट्कृती हयकृताः षट्पञ्चवेदर्तवो।**

**नन्दाङ्गान्यनलाद्रयोऽब्धितुरगा रामाद्रयः सप्ततिः।**

**पञ्चाङ्गानि हयेषवो वसुकृता अष्टाग्नयः षड्यमाः।**

**विश्वे खं च्युतिकेन्द्रके दशदशांशेषु स्थिता लिप्तिकाः॥**

**निजतुङ्गयुतो निशापतिर्द्विगुणार्केण हि मध्यमेन हीनः।**

**च्युतिकेन्द्रमितीर्यते फलं क्रियषट्के ऋणमन्यथा धनं स्यात्॥**[4]

### ( ग ) वार्षिकसंस्कारविमर्शः ( वार्षिकसमीकरणम् ) *(Annual Equation)*

चन्द्रो भुवं परितो भ्रमति, भूरियञ्च रविं परितो भ्रमति। अतो भूः रविर्वा स्वकीयोच्चस्थाने व्रजति तदा भुवं परितो भ्रमन्तं चन्द्रं स्वल्पमेवापकर्षति रविः। यत्तस्तु तत्र भुवा साकं वर्तमानश्चन्द्रः सूर्याद्दूरे तिष्ठति। यदा चेयं भूः स्वकीये नीचस्थाने गच्छति तदा चन्द्रः सूर्यस्य सन्निकटस्थो भवति। अतो हि तत्र चन्द्रमधिकमेवाकर्षते सूर्यः। परञ्च भूरियमेकेन सौरवर्षेण सौरकक्षां भ्रमति, अतः स्वकीयसम्पूर्णकक्षायां नीचासन्नत्वात् षण्मासपर्यन्तं चन्द्रस्य गतिः मध्यगतेरल्पा भवति। एवं भुव उच्चासन्नत्वात् षण्मासपर्यन्तं चन्द्रगतिः तन्मध्यम-गतितोऽधिका भवति। अर्थाच्चान्द्रमासाद्दैर्घ्ये यो विकारः समायाति तज्ज्ञानार्थमयं संस्कारो विधीयते। वस्तुतस्तु भूः सूर्याद् विभिन्नकाले विभिन्नं दूरत्वं धारयति। यदा रविर्नीचे भवति तदा तस्य कर्णस्य परमाल्पत्वं ततश्च विकर्षणमधिकतमम्। यदोच्चे तदा विकर्षणस्य परमाल्पत्वं जायते अनेनोत्पद्यमानः संस्कारश्चान्द्रमासदैर्घ्ये विकारं जनयति। विकर्षणप्रमाणं नवीनाकर्षणसिद्धान्ते श्रेणीगतं कलितं विद्यते।

### ( घ ) लम्बनीयसंस्कारविमर्शः *(Paralictic inequality)*

रवेश्चन्द्रे यद्विकर्षणं पौर्णमास्यां भवति तस्मादधिकतरममावस्यायां भवति। अतोऽनेन विकर्षणेन चन्द्रः कृष्णाष्टमीतः शुक्लाष्टमीपर्यन्तमधिकतरमाकृष्यते। तेन कृष्णाष्टमीतोऽमावस्यापर्यन्तं चन्द्रगतिरधिका अमान्ततः शुक्लाष्टमीपर्यन्तं च चन्द्रगतिरल्पा। गतौ जायमानादस्माद् विकारादुत्पद्यमानः संस्कार एव लम्बनीयसंस्कारः। अनेन संस्कारेण नवीनसिद्धान्ते रविकर्णो रविद्रव्यत्वञ्च गण्येते।

### ( ङ ) चन्द्रस्पष्टीकरणे अन्येषां महत्त्वपूर्णसंस्काराणां विमर्शः

मन्दफलेतरानां चतुर्णां संस्काराणां प्रयोजनमतिरिच्य केचन अन्येऽपि महत्त्वपूर्णाः संस्काराः चन्द्रस्पष्टीकरणे प्रयुज्यन्ते येषामुल्लेखः अंशमात्रेण प्राचीनग्रन्थेषु प्राप्यते। तत्र हि कर्षसंस्कारः, किरणवक्रिभवनसंस्कारः बीजसंस्कारश्च प्रमुखाः, एतेषां प्रयोजनं ग्रहाणां दृक्कर्मणि भवतीति निर्धार्य, अग्रे यथावसरे समीक्ष्यते। वस्तुतस्तु विचार्यमाणेऽत्र चन्द्रस्फुटीकरणाय नव्यैः ये संस्काराः क्रियन्ते तेषु केचन पूर्वाचार्यैः ज्ञाता एव। तत्र तैः मुख्यतया एव केचन संस्काराः स्वीकृताः, केषाञ्चन संस्काराणामतिस्वल्पत्वात् त्यागश्च कृतः।

वस्तुतस्तु तत्यागेनापि चन्द्रे बह्वन्तरं नापद्यते, अतो वृथा ग्रन्थप्रपञ्चेन ग्रन्थविस्तरेण चालमित्यालोच्यैव तैस्वल्पान्तरजन्यास्संस्काराः त्यक्ताः। तद्यथा ह्याचार्याः भास्कराः—

**स्वल्पान्तरत्वादबहूपयोगात् प्रसिद्ध्यभावाच्च बहुप्रयासात्।**

**ग्रन्थस्य तज्ज्ञैर्गुरुताभयेन यस्त्यज्यतेऽर्थो न स दूषणाय॥**[5]

मन्दफलेतराः ये चत्वारो मुख्याः संस्काराः त एव प्राचीनाचार्यैः प्रतिपादिताः। यथा प्रथमतो मुञ्जालाचार्येण चन्द्रोच्चरव्यन्तरेण तुङ्गान्तरसंस्कारः (Evection), रविचन्द्रान्तरेण च पाक्षिकसंसकारः (Variation) स्फुटचन्द्रे चन्द्रगतौ च कृतः। तदनु नित्यानन्दाचार्येण वर्णिता एते संस्काराः। आचार्यसामन्तचन्द्रशेखरसिंहेनापि संस्काराणामेतेषां चर्चा विहिता। भास्कराचार्येण बीजोपनये पाक्षिकसंस्कारः, तुङ्गान्तरसंस्कारश्च निर्दिष्टः। आचार्येण पाक्षिकसंस्कारस्य ज्ञानार्थं तत्फलानां चतुर्विंशतिः पिण्डकानि दत्तानि। तद्यथा—

**अर्कस्फुटाच्चन्द्रमिमं विशोध्यं शिष्टे-ऋणं त्वोजपदे फलं स्यात्।**

**अतोऽन्यथान्यत्र यथाक्रमं वै ब्रुवे फलानामपि पिण्डकानि॥**

**रसाश्च नन्दा गुणतारकेशौ भूभृद्भुवौ बाहुकरौ जिनाश्च।**

**तारा खरामा द्विगुणाश्च देवा वाराशिरामा सरिदीशकालाः॥**

**वेदाग्नयो दानवशत्रवश्च शशाङ्कवह्नी नवबाहवश्च।**

**रसाश्विनौ वेदकरौ खबाहूरसक्षमे रुद्र गजा नलाः खम्॥**

**एताः कलाः ओजपदे ऋणं स्युर्धनं तदन्यत्र भवन्ति भूयः।**

**अनेन युक्तश्च शशिस्फुटस्स्यात् कर्मार्हकालानयनेषु योग्यः॥**[6]

अनयैव रीत्या आचार्यकेतकरेणापि स्वकृतौ केतकीग्रहगणिते एतेषां संस्काराणां सूक्ष्मतया विवेचनं कृतम्। ग्रहस्पष्टीकरणे समीक्षणीयोऽयं विषयः यत् मध्यमस्पष्टग्रहयोरन्तर्भूतकारणानि कानि? कथं मध्यगत्यापेक्षया समागतो मध्यमग्रहो स्फुटो दृग्योग्यो वा न भवति? सैद्धान्तिकपक्षानाम-वलोकनेन ज्ञायते यत् मध्यमस्पष्टगत्योर्भेदत्वादेव मध्यमस्फुटग्रहयोरन्तरमापतति। अहर्गणेनागतो आनुपातिको ग्रहः मध्यमगतिकः, परन्तु स्वकक्षावृत्ते ग्रहः सर्वदा तयैव मध्यमगत्या न गतिमान् विद्यते, कदाचित्तस्य गतिः मध्यमापेक्षयाधिका कदाचिच्च न्यूनेति स्पष्टतया ज्ञायते, अतो ग्रहकक्षायां केचन अवयवा अदृश्यरूपास्सन्ति यैः मध्यमग्रहे न्यूनाधिक्यं समुत्पाद्य मध्यमस्पष्ट-ग्रहयोर्भेद उत्पाद्यते। अतः मध्यमग्रहे ये भेदोत्पादकाः अवयवाः सन्ति तेषां फलं मध्यमग्रहे धनं ऋणं वा विधाय स्पष्टग्रहाः साध्यन्ते। अतः प्राच्यावाच्यमतयोः किं कारणमिति विर्चायते।

## 2. प्राच्यमतेन मध्यमस्फुटग्रहयोरन्तरविश्लेषणम्

प्राचीनसिद्धान्तेषु मध्यस्फुटग्रहयोरन्तरभूतत्वेन त्रीणि[7] कारणानि प्रतिपादितानि सन्ति—

(1) मन्दोच्चकृताकर्षणम् (2) शीघ्रोच्चकृताकर्षणम्

(3) पातकृताकर्षणम्

एतानि शीघ्रमन्दोच्चपातस्थानानि ग्रहभ्रमणवृते एवं अदृश्यतया निबद्धानि, स्वाकर्षण-रज्जुभिश्च मध्यमग्रहान् स्वाभिमुखम् कर्षयन्ति दूरं वा प्रेरयन्ति, अतः मध्यमग्रहापेक्षया स्पष्टग्रहे भेदः समायाति।[8] यदा उच्चसंज्ञो बिन्दुः मध्यमग्रहस्थानात् पूर्वतः राशिषट्काभ्यन्तरे भवेत्तदा मध्यमग्रहं प्राङ्मुखम्, ग्रहात्पश्चाद्राशिषट्काभ्यन्तरे यदि उच्चस्थानं भवेत्तदा मध्यमग्रहं पश्चिमाभिमुखम् अर्थात् स्वसम्मुखं पूर्वापरं कर्षति।[9] अतः पूर्वकर्षिते ग्रहे मध्यमगतिः स्पष्टगत्यापेक्षया अधिका पश्चिमकर्षिते च मध्यमगतिः स्पष्टापेक्षया न्यूनेति स्फुटैव। तथा च ग्रहेषु याम्योत्तराकर्षणं पातवशाद्भवति। यदा ग्रहापेक्षया पात ऊनः परं राषिषट्काभ्यन्तरितो भवति तदा क्रान्तिवृत्ताद्विमण्डलमुत्तरगतं विक्षेपतुल्यान्तरे भवति। अतस्तदा ग्रहबिम्बं क्रान्त्यन्तबिन्दोर्विक्षेपतुल्यमुत्तरगतं भवति। यदा च पातः ग्रहापेक्षयाधिकः परं राशिषट्काभ्यन्तरे भवति तदानीं क्रान्तिवृत्ताद्विमण्डलस्य विक्षेपतुल्यं दक्षिणतोगतत्त्वात् क्रान्त्यन्तबिन्दोर्ग्रहबिम्बं विक्षेपतुल्यं दक्षिणतो भवतीति निरुपितं सिद्धान्तेषु।[10] अत्र ध्यातव्यमिदं यत् उच्चनीचयोः कृताकर्षणस्य समन्वयो मन्दप्रतिवृत्तभङ्ग्या नीचोच्चभङ्ग्या च विधत्तमाचार्यैः। तत्र भवतु नाम भगोलस्य केन्द्रं भूरेव स्यात् परन्तु ग्रहगोलकेन्द्रं भूकेन्द्रादितरे वर्तते।[11] अतो ग्रहास्तु प्रतिवृत्ते भ्रमन्ति यस्य केन्द्रं भूकेन्द्रादन्यत्र वर्तते। सूर्यचन्द्रयोः भूसापेक्षत्वादेव मन्दोच्चाकर्षणजन्यमन्दफलसंस्कारेणैव तौ स्फुटौ, परन्तु पञ्चताराग्रहाणामादौ भारतीयपरम्परायां मन्दप्रतिवृत्तकेन्द्राभिप्रायिकेन मन्दफलेन शीघ्रोच्चकृता-कर्षणेन शीघ्रफलेन च संस्कार्य मध्यमग्रहो स्फुटीक्रियते। यस्मिन् वृत्ते मध्यमग्रहो भ्रमति तन्मन्दप्रतिवृत्तम्। योहि बिन्दुः भूकेन्द्राद् दूरतरप्रदेशे स्थितस्तस्य मन्दोच्चसंज्ञा शीघ्रोच्चसंज्ञा वा कृता, निकटतमप्रदेशस्य च नीचसंज्ञा विहिता।[12] इदमुच्चमेवाकर्षकः। अतः मन्दोच्चस्थाने ग्रहगतिः परमाल्पा नीचे च परमाधिका। सूर्यचन्द्रयोः प्रतिदिनं वेधेनावस्थितिं विज्ञाय मन्दोच्चस्थानं ज्ञातुं शक्यते। अन्येषां ग्रहाणां मन्दोच्चज्ञानार्थं स्फुटग्रहाद् विलोमसंस्कारः अपेक्षितः। दिनद्वयग्रहान्तरं मन्दस्पष्टागतिः, अतः प्रत्यहं वेधेन मन्दस्फुटगतिं विज्ञाय यदा मन्दस्फुटगतेः परमाल्पत्वं दृश्यते तदा मध्यमग्रह एव मन्दस्पष्टो भवति, अर्थात् ग्रहतुल्यमेव मन्दोच्चं भवति। एवमेव शीघ्रोच्चज्ञानमपाकर्तुं शक्यते। अस्य मन्दोच्चशीघ्रोच्चयोरपि गतिर्भवति, नायं स्थिरप्रदेशः।[13] अतः अनयोरप्यानयनं भगणवशाज्जायते, परन्तु चन्द्रं विहायान्येषां मन्दोच्चानां गतिः वर्षशतैरपि नावलोक्यते[14] भास्करेनोक्तम्। चन्द्रविषये तस्योच्चस्यापि प्रतिवत्सरं भिन्नं भिन्नं स्थानमभिज्ञातमाचार्यैः तस्य गतिश्च सूक्ष्मतया साधिता।[15] अतः ताः कियत्यः इत्याशङ्क्य कुट्टकोक्तविलोमविधिना तेषां गतिः सिषिधुराचार्याः। अत्र विषये

नवीनैरेवमाक्षिप्यते यत् ग्रहाः सर्वेपि पातमन्दोच्चसहिताः कल्पादावश्विन्यादावतिष्ठन्नित्यत्र न किमपि मानम्। कल्पकालश्च तद्तद्ग्रहणभगणकालानां पूर्णाङ्कवृत्त्या कल्पितः, न तु वास्तविकः। अतश्चन्द्रमन्दोच्चं हित्वा इतरग्रहोच्चानां गतयो न दृक्सिद्धाः। अत एव दीक्षितमहोदयेन भारतीयज्योतिषे प्रोक्तं यत् ग्रीकदेशीयाः हिपार्कसटालमीप्रभृतयो गणकाः मन्दोच्चगतिं न जानन्ति स्मेति मन्दोच्चगतिज्ञानं भारतीयगणकाणां सूक्ष्मवेधज्ञतां प्रकटयति।[3] उच्चादुच्चस्थानं यावत् परिक्रमाकालः उच्चभगणपूर्तिकालः। आधुनिकज्योतिषमतानुसारं एतादृशो भगणपूर्तिकालः (Periodic time of almanistic motion) इति नाम्ना व्यवह्रियते।

पातकृतयाम्योत्तराकर्षणस्य फलसंस्कारः विक्षेपवशात् दृक्कर्मणि विधीयते, तस्य समीक्षा पञ्चमाध्याये विधास्यते। मध्यमस्पष्टग्रहयोः दिग्देशकालवशादन्यान्यप्यन्तराणि जायन्ते तेषां ज्ञानं देशान्तरोदयान्तरप्रभृतिसंस्कारैः ज्ञायते। शीघ्रोच्चज्ञाने तु भारतीयाचार्यैः अन्तर्ग्रहीयत्वेन बहिर्ग्रहीयत्वेन च द्विधा शीघ्रोच्चं पठितम्। यथा ग्रहाणां सूर्यकेन्द्राभिप्रायिकभ्रमणस्याङ्गीकाराद् भौमगुरुशनयः बहिर्ग्रहाः भवन्ति बुधशुक्रौ चान्तर्ग्रहौ भवतः। तत्र बहिर्ग्रहाणां शीघ्रोच्चं रविर्निर्दिष्टम् अन्तर्ग्रहयोश्च शीघ्रोच्चमन्यथोक्तम्। तत्र कथं नैव सर्वेषां ग्रहाणामेकरूपं शीघ्रोच्चकल्पितमिति जिज्ञासायामुच्यते यद् रविकेन्द्रिकग्रहभ्रमणस्याङ्गीकारात् स्पष्टं प्रतिभाति यत् यदा बहिर्ग्रहाः रवितुल्याः भवन्ति तदैव ग्रहो भुवोऽत्युच्चं प्रदेशं गच्छति। तदानीं रवेरेकस्मिन् भागे भूः अपरस्मिन् च भागे बहिर्ग्रहो भवति। अर्थाद्रवितुल्ये बहिर्ग्रहे सति तस्योच्चप्राप्तिः। परं तत्र बहिर्ग्रहापेक्षया रवेरेवाधिकगतिकत्वाद् बहिर्ग्रहस्य गतितस्तदुच्चगतिरेवाधिकतरा अतो ग्रहगतितः तदुच्चगतेरधिकतरत्वात् कुजादीनां विषये रविरेव शीघ्रोच्चमिति युक्तियुक्ता संज्ञा।[16]

अथ बुधशुक्रयोः रविगतितोऽधिकगतिमत्वात् तयोः वास्तविकौ ग्रहावेव शीघ्रोच्चत्वेनाभिहितौ प्राचीनाचार्यैः। तत्र तयोर्वास्तविकबिम्बयोरेव शीघ्रोच्चत्वेनाभिहितत्वात् तयोर्मध्यमग्रहो मध्यमरवितुल्य एव कल्पितः। वस्तुतः बुधशुक्रौ रवेरनुचराविव कदाचित्तस्याग्रतः पृष्ठतश्च व्रजन्तौ भचक्रभोगं कुरुतः। अर्थात् रवितोऽतिदूरे राशित्रयादधिके प्रदेशे तौ नैव गच्छतः। अतो रविभगणा एव बुधशुक्रयोर्भगणाः स्वीक्रियन्ते तथा मध्यमरविरेव बुधशुक्रयोर्मध्यमग्रहत्वेन स्वीक्रियते। अतो प्राचीनैः रविकेन्द्रिकभगणा एव बुधशुक्रयोश्शीघ्रोच्चभगणाः स्वीकृताः परन्त्वेतत् सर्वं फलोपपत्त्यै प्रकल्पितमपि वास्तविकौ बुधशुक्रयोर्ग्रहबिम्बौ कुत्र भ्रमत इति जिज्ञासायां भास्करेण स्पष्टतया निर्दिष्टम्।[17] शीघ्रोच्चज्ञानप्रसङ्गे अर्वाचीनज्योतिर्विज्ञाने अर्कसोमयाजिमहोदयेनोक्तं यत् — ग्रहाः रविकेन्द्रिकवृत्तेषु न भ्रमन्ति, किन्तु गणितेनानुमीयते। अत्र प्राचीनाचार्यैर्प्रदर्शिता गणितीयपद्धतिः रविकेन्द्रत्वं सूचयन्त्यपि कथं तैस्तथा नोक्तमित्याश्चर्यम्। तत्रैव—

**कुजजीवशनीनान्तु रविश्शीघ्रोच्चनामकः।**
**ज्ञशुक्रयोर्ग्रहः सूर्यः भवेत्तौ शीघ्रनामकौ॥**[18]

## 3. अर्वाचीनमतानुसारेण मध्यमस्फुटग्रहयोरन्तरविमर्शः

मध्यमस्पष्टग्रहयोरन्तरज्ञाने प्राचीनमतापेक्षया अर्वाचीनानां न हि कश्चन तात्त्विको भेदः। वस्तुतः ग्रहभ्रमणवृत्तस्य दीर्घवर्तुलाकारत्वस्वीकारे कक्षाप्रतिवृत्तयोः समन्वितां भङ्गिद्वयकल्पनां विहाय ग्रहभ्रमणवृत्तस्य केन्द्रे सूर्यं प्रकल्प्य ततः सूर्यकेन्द्रात् ग्रहाणां मध्यमस्पष्टगतिवशात् मध्यमस्फुटग्रहयोरन्तरविश्लेषणं तैर्कृतम्। 1571 ईस्वीये केपलरमहोदयेन ग्रहगतिसम्बन्धिनो नियमाः प्रतिपादिताः—

(1) **कक्षानियमः** (Law of Orbit) — सर्वेग्रहाः सूर्यनाभिकदीर्घवृत्ते भ्रमन्ति।

(2) **क्षेत्रफलनियमः** (Law of Area)— रविग्रहमध्यमदूररूपकर्णो रविनाभिं परितस्तुल्यकाले तुल्यक्षेत्राक्रमणनियमेन भ्रमति, अर्थात् सूर्यग्रहकेन्द्रगता रेखा समकाले समं क्षेत्रं निर्मातीति द्वितीयो सिद्धान्तः।

(3) **परिक्रमणकालनियमः** (Law of Revolution Period)— मन्दकर्णवर्गघनयोर्निष्पत्तिः समैव। एतेन तु यो ग्रहः सूर्याद् यावन्मितं दूरं तत्परिभ्रमणकालश्च तन्मितमधिकमेवेति तृतीयो नियमः।

अत्र हि ग्रहप्रदक्षिणाकालानां यो वर्गस्तस्य घनमूलं ग्रहमध्यममन्दकर्णो भवतीति नियमः। इत्थं मन्दकर्णघनस्य वर्गमूलं भगणकालो भवतीति केपलरीयतृतीयनियमात् सूर्यतो ग्रहाणामन्तर-रूपमन्दशीघ्रकर्णयोर्ज्ञानं भवति। अतः आधुनिकानां समवाये तु

(1) सूर्याद्ग्रहस्य परमान्तरमुच्चसंज्ञकम्

(2) सूर्याद्ग्रहस्य न्यूनान्तरं नीचसंज्ञकम्

अतः मध्यमस्फुटग्रहयोरन्तरं उच्चनीचकारणभूतमेव अर्वाचीनैरपि स्वीक्रियते, तद्वशात् ग्रहगतौ न्यूनाधिक्यादाधुनिकैः केपलरस्य द्वितीयनियमेनादौ केन्द्रच्युतिज्ञानम् (ecentricity) अर्थात् सू प इत्यस्यमानं ज्ञायते अतः केपलरमहोदयेन ग्रहकर्णवशाच्च्युतिज्ञानेन मध्यमस्पष्टग्रहयोरन्तरं प्रतिपादितम्। एतदनन्तरं 1643 तमे ख्रीस्ताब्दे न्यूटनमहोदयेन गुरुत्वाकर्षणसिद्धान्तः मध्यमस्पष्टग्रहयोरन्तरकारणभूतोऽन्वेषितः, अयमेवाकर्षणसिद्धान्तः प्राचीनभारतीयसिद्धान्तज्योतिषपरम्परायामपि दृश्यते। मध्यमस्पष्टग्रहयोरन्तरकारणभूतस्य गुरुत्वाकर्षणस्येमानि त्रीणि सूत्राणि तैः व्याख्यापितानि यथा—

(1) ग्रहे सूर्याभिमुखं केन्द्रिकं बलं शक्तिविशेषरूपं (आकर्षणम्) प्रचाल्यमानं विद्यते।

(2) आकर्षणवशात् ये ग्रहाः सूर्याभिमुखिनस्सन्ति तेषां परिमाणं सूर्यतो ग्रहान्तरवर्ग-विलोमानुसारं भवति।

(3) आकर्षणमिदं ग्रहद्रव्यमानस्यानुक्रमानुपाती भवति। अर्थाद् सूर्यस्य यथा-यथा सन्निकटत्वं ग्रहाणां जायते

आकर्षणफलमधिकमुत्पद्यते। अतः न्यूटनमहोदयः समर्थयामास यत् आकर्षणशक्तिश्च कर्णवर्गस्य वैलोम्येन भवति। कर्णवर्गाधिक्ये शक्तिह्रासः कर्णवर्गाल्पत्वे शक्तिवृद्धिश्च भवतीति।

अथ च रवेर्यावती शक्तिर्ग्रहे कर्णमार्गेणैव भवति, ग्रहे नान्या शक्तिर्विद्यत इत्युक्ते कर्णस्य लम्बमार्गे न काचिच्छक्तिर्विद्यते। अथ च केपलरीयतृतीयसूत्राद् रवेराकर्षणं ग्रहेषु तुल्यदूरे तुल्यमेवेति। यत्किञ्चिदपि वस्तु वस्त्वन्तरं सदाकर्षति तदाकर्षणशक्तिमानञ्च वस्तुद्वयद्रव्यघातं वस्त्वन्तरदूरवर्गभाजितं भवतीत्याकर्षणसिद्धान्तः। अयमेव सिद्धान्तो गोलीयशक्तिशास्त्रस्य मूलभूतो न्यूटनकालादारभ्य पाश्चात्यखगोलशास्त्रमतीवं विस्तारयामास। अत एव फलानयने आधुनिकैः मन्दनीचोच्चपरिधेः केन्द्रं भूकेन्द्रमेव स्वीक्रियते।[19]

**4. मध्यमस्फुटचन्द्रयोरन्तरभूतानामन्येषां कारणानां विमर्शः**

उच्चनीचपातादीनां गुरुत्वाकर्षणप्रभावेनान्तरितानां मध्यस्फुटग्रहाणां ज्ञानं मन्दशीघ्रफलसंस्कारेण विक्षेपवशात् दृक्कर्मसंस्कारेण च जायते, परन्तु अन्यान्यपि कानिचन प्रमुखानि अन्तर्भूतकारणानि मध्यमस्फुटग्रहयोस्सन्ति, मानाधिक्यात् सम्प्रति तेषामपि संस्कारः मध्यमग्रहे, किं वा स्फुटग्रहे च सूक्ष्मस्पष्टतायै आवश्यकः प्रतीयते। यथा चन्द्रस्पष्टीकरणे केवलं मन्दफलेन संस्कृतश्चन्द्रः प्राच्यावाच्ययोरुभयत्र च स्पष्टतां नैति। तत्र बहवः संस्काराः अपेक्षितास्सन्ति। चन्द्रस्याधुनिकं मन्दफलं $6^{0}2$ कलाप्रमितं प्राप्यते, अतो मध्यमस्पष्टचन्द्रयोः भेदकारकाः अन्येऽपि हेतवस्सन्तीति ज्ञायते। वस्तुतः चन्द्रस्य गत्यधिकत्वादयं भेदः सुलभतया प्रतीयते, कालान्तरे सर्वेषु ग्रहेष्वेते संस्काराः न्यूनाधिकभेदेन अपेक्ष्यन्ते। अत्र तावत् संक्षेपतया मध्यमस्फुटग्रहयोरन्तभूतकारणानि तज्जन्यसंस्काराश्च उपस्थाप्यन्ते—

(1) **च्युतिसंस्कारः–** च्युतिर्नाम केन्द्रच्युतिः। सूर्यापेक्षयोच्चनीचरेखास्थितिवशात् चन्द्रस्य (Nucleus Diversion) केन्द्रच्युतिः भवति। उच्चगतिव्यभिचारादपि केन्द्रच्युतेरूनाधिक्यं संभवति। अस्मादेव ग्रहाणां मन्दफले भेदो दृश्यते। विशेषतया चन्द्रे अवलोक्यते। अयमेव संस्कारः तुङ्गान्तरसंस्कारेणापि व्यवह्रियते (Orbit Diversion) संस्कृतचन्द्रस्पष्टरव्योर्विचलनवशाज्जायमानमन्तरमपाकरणायायं संस्कारः। एतस्य मानम् $1^{0}$ 20.2 कलाप्रमितं आधुनिकैः प्रतिपाद्यते।[20] एतच्च सर्वेषां ग्रहाणां भवितुं शक्यते।

(2) **पाक्षिकसंस्कारः (Variation)—** सूर्यस्य प्रतिपक्षे न्यूनाधिक्याकर्षणात् जायमानमन्तरं साध्यते।

(3) **तिथिसंस्कारः (Daily Variation)—** दैनिकसूर्यचन्द्रगत्या ज्जायमानं संस्कारविशेषश्चन्द्रे भवति। वस्तुतो पाक्षिकतिथिसंस्कारयोरेकतस्यैव प्रयोजनं भवति।

(4) **वार्षिकसंस्कारः (Annual Equation)—** वर्षे सूर्यकेन्द्रिकभ्रमणे भूमे उच्चासन्नत्वात् नीचासन्नत्वाच्च यो गतिविकारः वर्षे उत्पद्यते तस्यायं संस्कारः। अयमपि सर्वेषां ग्रहाणां भवतीति ज्ञायते।

(5) **लम्बनीयसंस्कारः (Paralictic Inequality)—** सूर्यविकर्षणेन चन्द्रे गतिभेदोत्पद्यमानः संस्कारः।

(5) **कर्षसंस्कारः–** गुरुत्वाकर्षणप्रभावक्षेत्रं न्यूनाधिकं भवतीत्यस्य संशोधनायायं संस्कारः। ग्रहकक्षायाः सङ्कुचनमानमप्यनेन ज्ञायते।

(6) **किरणवक्रिभवनसंस्कारः (Deviation of Rays)—** वातावरणजन्यकिरणवक्रत्वेन स्पष्टग्रहे दर्शनायोग्यतायाः निराकरणायं संस्कारविशेषः। एवमन्यानि कारणानि सन्ति मध्यमस्फुटग्रहयोरन्तरभूतानि येषां विवेचनं संस्काराणां परिशीलने यथावसरे कृतम्।

➢ **निष्कर्षः**

मध्यमस्फुटग्रहयोरन्तरभूतं मूलसैद्धान्तिकं कारणमाकर्षणविकर्षणमेव। तदाकर्षणं प्राचीनमतानुसारेणोच्चनीचाभ्यां भवतु नवीनानां च मतानुसारेण सूर्याद्वा भवतु। नव्यैः ग्रहस्फुटीकरणे ये संस्काराः क्रियन्ते तेषु केचन पूर्वाचार्यैः ज्ञाताः परन्तु मुख्यतया त एव संस्काराः तैः स्वीकृताः येषां सुलभतया ज्ञानं स्यात्, स्वल्पान्तरजन्यमन्तरं तैः नाङ्गीकृतम्।

मुञ्जालाचार्येण तु चन्द्रोच्चरव्यन्तरेण तुङ्गान्तरसंस्कारः, रविचन्द्रान्तरेण पाक्षिकसंस्कारः स्फुटचन्द्रसाधने चन्द्रगतिसाधने च कृतः। आचार्यभास्करेण च बीजोपनये ग्रन्थे मध्यस्फुटग्रहयोरन्तर्भूतानां तत्त्वानां विवेचनं विशदतया विहितम्। अद्यापि वेधवशात् मध्यस्फुटयोरन्तरं सहजतया ज्ञातुं शक्यते तथा चानुदिनं नवीनाः पक्षाः दृष्टिपथि समागच्छन्ति। भारतीयग्रहगणित-परम्परायां म.म. बापूदेवशास्त्रिभिः सुधाकरद्विवेदिभिश्च नूतनसंस्काराणां प्रासङ्गिकतानुमोदिता ग्रहगणितपद्धतिश्च विकसिता। प्राचीनार्वाचीनमध्यमस्फुटग्रहयोर्मौलिकमन्तरं यत् प्राचीनस्पष्टग्रहाः साक्षात्तया भूसापेक्षिकाः नक्षत्रानुरोधेनैव जायन्ते, परमाधुनिकपरम्परायां सूर्यकेन्द्रिकस्फुटग्रहाणां परिणामनं भूसापेक्षे विधीयते। इत्थमुभयत्र इषदन्तरेण साम्यता एव विद्यते। आचार्यकेतकरेणास्य समन्वयश्च स्थापितः।

**सन्दर्भाः -**

1. ग्र.ग.मी., पृ. 22.
2. लघुमानसे, 3/18-19.
3. केतकीग्रहगणिते, स्प.अ., श्लो.सं. 19-20.
4. के.ग्र.गणिते.स्प.अ., श्लो.सं. 17-18.

5. सि.शि.उ.अ. श्लो.सं. 16.
6. भास्करीयबीजोपनये, श्लो.सं. 29-32.
7. शीघ्रमन्दोच्चपाताख्याः ग्रहाणां गतिहेतवः। (सू.सि.स्प. श्लो.सं. 1)
8. पूर्वापरापकृष्टास्ते गतिं यान्ति पृथग्विधाम्। (सू.सि.स्प. श्लो.सं. 2)
9. सू.सि. स्प. (तत्रैव श्लो.सं. 4-5).
10. उत्तराभिमुखं पातो विक्षिपत्यपरार्द्धगः। ग्रहं प्राग्भगणार्धस्थो याम्यायामपकर्षति।। सू.सि.स्प.अ. 6.
11. भूमेर्मध्ये खलु भवलयस्यापि मध्यं यतः स्यात्, यस्मिन् वृत्ते भ्रमति खचरो नास्य मध्यं कुमध्ये। (सि.शि.गो.छे. 50).
12. भ्रमन्ग्रहः स्वे प्रतिमण्डले नृभिः, सि.शि.गो.छे. श्लो. 20.
13. प्रकल्पितं तुङ्गमिहाद्यसूरिभिः.
14. वासनाभाष्यतः समुद्धृतम्,
15. भारतीयज्योतिषम्, पृ.सं. 478.
16. भौमार्कीज्यविहीनमध्यमरविस्स्यात्स्वाशुकेन्द्रं तु विद्। ग्र.प.ता.स्प. श्लो.सं. 6.
17. अर्कस्य कक्षैव सितज्ञयोः सा ज्ञेया तयोरानयनार्थमेव। उक्ते तयोर्ये चलतुङ्गयोर्ये तत्रैव तौ च भ्रमतोऽर्कगत्या।। सि.शि.म.आ.क.अ. श्लो.सं. 9
18. ज्योतिर्विज्ञानम्, पृ.सं. 25.
19. ग्र.ग.मी., पृ.सं. 11.
20. के.ग्र.ग., तास्प.17-18.



# संस्कृत रूपकों में वर्णित सूत्रधार का अध्ययन

*डॉ. प्रदीप कुमार**

यद्यपि कि संस्कृत रूपकों में छोटे से छोटे पात्र की अपनी विशिष्ट भूमिका होती है। रङ्गमञ्च पर नट अपनी जिस भूमिका में प्रवेश करता है, उसी भूमिका में रूपक समाप्त होने तक जीता है। ऐसे पात्रों में सूत्रधार का भी वर्णन मिलता है, जिसका प्रवेश रूपक में प्राण डाल देता है।

सूत्रधार का अर्थ- यह दो शब्दों के योग से निर्मित है-

1- सूत्र् धातु से **'अच्'** प्रत्यय करके

सूत्र सु **'अतोऽम्'**[1] सूत्र से सु के स्थान पर **'अम्'**

सूत्र अम् **'अमिपूर्वः'**[2] से सूत्र शब्द के उत्तरवर्ती अकार तथा अम् के अकार के स्थान पर पूर्वरूपेकादेश से **सूत्रम्** शब्द का निर्माण हुआ ।

**सूत्रम्** जिसका अर्थ होगा-धागा, रेखा, रस्सी, रेशा, तन्तु, पुत्तलिका का तार, धागों की आटी, यज्ञोपवीत, जनेऊ (जो प्रथम तीन वर्ण धारण करते हैं।)[3]

धारः

धृ (धारण करना) धारयति / धारयते ।

धृ कर्मण्यण्[4] से **'अण्'** प्रत्यय करके -

धृ अण् **'अचोञ्णिति'**[5] सूत्र से ऋ को वृद्धि से आ तथा **'उरणरपरः'**[6] से आ के

साथ

रकार का व्यवहार । पुनः-

धार् अ = धार सु पुनः सु के उकार का अनुबन्ध लोप तथा सकार को रुत्व और विसर्ग

धारः ।

इस प्रकार **'सूत्रधार'** शब्द का निमार्ण हुआ । जिसका अर्थ है- स्थापक।

सूत्रधार का लक्षण-

**नाटकीयकथासूत्रं प्रथमं येन सूच्यते ।**

**रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥**

**..........................................**

**आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः।**

**रङ्गप्रसाधनप्रौढः सूत्रधारः स उच्यते ॥**[7]

जो सर्वप्रथम रङ्गभूमि में प्रवेश करके नाटकीय कथावस्तु की सूचना देता है,वह सूत्रधार कहलाता है ।

जो सूत्र धारण करता हुआ कवि के गुणों और कथावस्तु का स्थापक तथा रङ्गभूमि की साज-सज्जा का पारखी होता है,वह सूत्रधार कहलाता है।

**नाट्योपकरणादीनि सूत्रमित्यभिधीयते।**

**सूत्रं धारयते यस्तु सूत्रधारः स उच्यते॥**[8]

जो नाट्यसम्बन्धी उपकरणों से युक्त रङ्गमञ्च पर सूत्र का स्थापन करता है। तथा सूत्र (जनेऊ) धारण करता है, वह सूत्रधार कहलाता है।

**अपि च**

**नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात् सबीजकम्।**

**रङ्गदैवतपूजाकृत् सूत्रधार उदीरितः॥**[9]

बीजसहित नाटक के अनुष्ठान को सूत्र कहते हैं। जो उसको धारण करने वाला (सञ्चालन करने वाला) होता है । उसे सूत्रधार कहते हैं ।

सूत्रधारलक्षण के बाद आचार्य धनञ्जय ने कहा-

**पूर्वरङ्ग विधायादौ सूत्रधारे विनिर्गते ।**

**प्रविश्य तद्वदपरः काव्यमास्थापयेन्नटः ॥**[10]

प्रारम्भ में पूर्वरङ्ग का कार्य करके सूत्रधार चला जाता है । फिर उसी के जैसा दूसरा नट (अभिनेता) रङ्गमञ्च पर प्रवेश करके काव्य की स्थापना करता है।

**सूत्रधारो नटीं ब्रूते मार्षं वाऽथ विदूषकम् ।**
**स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखम्॥**[11]

जहाँ सूत्रधार (स्थापक) विचित्र उक्ति के द्वारा नटी, पारिपार्शिविक (मार्ष) या विदूषक को प्रस्तुत अर्थ का आक्षेप करने वाला अपना कार्य बतलाता है, वह आमुख (प्रस्तावना) कहलाता है।

---

* असिस्टेन्ट प्रोफेसर, संस्कृत विभाग कला संङ्काय, काशी हिन्दू विश्वविद्यालय

सुत्रधार का वर्णन नान्दी के बाद आता है,जो प्राचीन पुस्तकों में प्राप्त होता है –

**नान्द्यन्ते सूत्रधारः ।**

आचार्य विश्वनाथ ने सूत्रधार के विषय में संक्षेप में कहा-

**पुर्वरङ्गं विधायैव सूत्रधारो निवर्तते ।**

**प्रविश्य स्थापकस्तद्वत्काव्यमास्थापयेत्ततः॥**[12]

पूर्वरङ्ग का विधान कर सूत्रधार जाता है। तब सूत्रधार के समान स्थापककाव्य का आस्थापन होता है ।

**नान्द्यन्ते प्रविशति ततः सूत्रधारः**

नान्दी समाप्त हो जाने के बाद सूत्रधार रङ्गमञ्च पर प्रवेश करता है।

**अभिज्ञानशाकुल नाटक से-**

सूत्रधार- (नेपथ्याभिधानमवलोक्य) आर्ये, यदि नेपथ्याभिधानमवसितम्, इतस्तावदागम्यताम् ।[13]

(नेपथ्य को सामने देखकर) आर्ये, यदि (नेपथ्य-कार्य) नटों की सज्जा सम्पन्न हो गयी हो तो इधर आओ ।

**प्रविश्य**

नटी- आर्यपुत्र, इयमस्मि (अर्यपुत्र,यह मैं उपस्थित हूँ)

सुत्रधार-आर्ये, अभिरूपभूयिष्ठां परिषदियम् । अद्य खलु कालिदासग्रथितवस्तुनाऽभिज्ञानशाकुन्तलनामधेयेन नवेन नाटकेनोपस्थातव्यस्माभिः । ततः प्रतिपात्रमाधीयतां यत्नः ।[14]

आर्ये ! यह विशिष्ट विद्वानों की बडी सभा है । आज हमें कालिदास द्वारा रचित अभिज्ञानशाकुन्तल नाम नये नाटक का अभिनय करना है । अतः प्रत्येक पात्र पर ध्यान देना ।

**नान्द्यन्ते**

**रत्नावली नाटिका से-**

अलमतिविस्तरेण ! अद्याहं वसन्तोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज्ञः श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तो यथा- अस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालङ्कृता रत्नावली नाम नाटिका कृता । सा चास्माभिः श्रोत्रपरम्परया श्रुता न तु प्रयोगतो दृष्टा । तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्धया यथावत्प्रयोगेण त्वया नाटयितव्येति । तद्यावदिदानीं नेपथ्यरचनां कृत्वा यथाभिलषितं सम्पादयामि । (परिक्रम्य अवलोक्य च ।) अये आवर्जितानि सकलसामाजिकानां मनांसीति मे निश्श्र्यः । कुतः-

श्रीहर्षो निपुणः कविः परिषदप्येषागुणग्रहिणी लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुनर्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ।[15]

अधिक विस्तार (वर्णन) व्यर्थ है । मुझे आज वसन्तोत्सव पर आदर के साथ बुलाकर अनेक दिशाओं (स्थानों) से आये हुये राजा श्रीहर्षदेव के चरणकमलाश्रित राजाओं के समूह ने कहा है, कि हमारे स्वामी श्रीहर्षदेव ने अपूर्व वस्तु रचना से अलङ्कृत रत्नावली नाम की नाटिका की रचना की है और वह हम लोगों ने तो कानों से सुनी है । पर अभिनय रूप से नहीं देखी है । (तुम) उन्हीं महाराज (श्रीहर्ष) की सभी लोगों के मन को प्रसन्न करने वाली हम (कवि) पर अति सम्मान तथा कृपा बुद्धि से यथोचित अभिनय द्वारा उस नाटिका को अभिनीत करो । अतएव अब जब तक नेपथ्य रचना करके इच्छानुकूल सब कार्य पूर्ण करता हूँ । (घूमकर और देखकर)

अरे ! सभी सामाजिकों (नाटकदर्शकों) के मन हमने अपनी ओर आकर्षित कर लिये हैं । ऐसा मेरा विश्वास है। क्योंकि

श्रीहर्षदेव निपुण कवि हैं, यह परिषद् (दर्शकसभा) भी गुणों को ग्रहण करने वाली है, इस प्रकार एक गुण का होना भी वाञ्छित फल (सफलता) दिलाने वाला होता है । तो फिर यहाँ हमारे सौभाग्य से समस्त गुण एकत्र प्राप्त हो रहे हैं ।

**नान्द्यन्ते-**

**उÙररामचरित नाटक से-**

सूत्रधारः- अलमतिविस्तरेण ! अद्य खलु भगवतः कालप्रियानाथस्य यात्रायामार्यमिश्रान् विज्ञापयामि एवमत्रभवन्तो विदांकुर्वन्तु । अस्ति खलु तत्रभवान् काश्यपः श्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणज्ञो भवभूतिर्नाम जतुकर्णीपुत्रः।[16]

**नान्दी के बाद –**

अधिक विस्तार बन्द करो । आज भगवान् कालप्रियानाथ (शंकर) के उत्सव के अवसर पर आदरणीय जनों में भी श्रेष्ठ (आप) महानुभावों को विनम्रता के साथ सूचित कर रहा हूँ । (इस सूचना को) इस प्रकार पूजनीय आप लोग समझें–

आदरणीय काश्यपगोत्र में उत्पन्न, 'श्रीकण्ठ' इस उपाधि से विभूषित, व्याकरण, मीमांसा तथा न्याय के मर्मज्ञ, जतुकर्णी के पुत्र भवभूति नाम वाले (एक कवि) हैं ।

**उपसंहृति-**

निष्कर्षतः कहा जा सकता है,कि सूत्रधार जो कि रूपक में आदि पात्र के रूप में रङ्गमञ्च पर प्रवेश करके काव्य की स्थापना करता है। वह रूपक का प्रमुख पात्र माना जाता है। वह रूपक चाहे नाटक हो, प्रकरण हो, भाण हो, व्यायोग हो

या प्रहसन हो चाहे उपरूपक का प्रमुख भेद मानी जाने वाली नाटिका हो, सबमें सूत्रधार की भूमिका महत्त्वपूर्ण मानी जाती है।

## सन्दर्भ-सूची-

(1) श्रीधरानन्दशास्त्रीयव्याख्याकृत लघुसिद्धान्तकौमुदी/पृ0-223

(2) श्रीधरानन्दशास्त्रीयव्याख्याकृत लघुसिद्धान्तकौमुदी/पृ0127

(3) वामन शिवराम आप्टे कृत संस्कृत-हिन्दी /पृ0/1119

(4) श्रीधरानन्दशास्त्रीयव्याख्याकृत लघुसिद्धान्तकौमुदी/पृ0-727

(5) श्रीधरानन्दशास्त्रीयव्याख्याकृत लघुसिद्धान्तकौमुदी/पृ0-167

(6) श्रीधरानन्दशास्त्रीयव्याख्याकृत लघुसिद्धान्तकौमुदी/पृ0-38

(7) शारदातनयविरचित भावप्रकाशन / पृ0-288

(8) डॉ0रमाशंकरत्रिपाठीव्याख्याकृत उत्तररामचरित,तृतीय संस्करण/1/पृ0-5

(9) डॉ0रमाशंकरत्रिपाठीव्याख्याकृत उत्तररामचरित,तृतीय संस्करण परिशिष्ट भाग/पृ0-561

(10) आचार्य धनञ्जय-विरचित दशरूपक / 3 / 2

(11) आचार्य धनञ्जय-विरचित दशरूपक / 3 / 8

(12) आचार्य विश्वनाथ-विरचित साहित्यदर्पण / 6 / 26

(13) महाकवि कालिदास-विरचित अभिज्ञानशाकुन्तलम् / 1 / पृ0-2

(14) महाकवि कालिदास-विरचित अभिज्ञानशाकुन्तलम् / 1 / पृ0-3

(15) डॉ0 जयमङ्गलपाण्डेयव्याख्याकृत रत्नावली /1 / पृ0/9

(16) डॉ0रमाशंकरत्रिपाठीव्याख्याकृत उत्तररामचरित,तृतीय संस्करण/1/पृ0-4



# कालिदाससाहित्ये सङ्गीतम्

*डॉ. शोभा मिश्रा*[*]

कविताकामिन्याः विलासः कविकुलगुरुः कालिदासो हि नितान्तं कलाप्रियः । एका कला कलान्तरे अलङ्कारत्वं व्रजतीति प्रतीतचरं विदुषां कालिदाससाहित्यस्यानुशीलनेन । तत्र काव्यमपि कलारूपेण प्रतिष्ठितं प्रतिभाति प्रतिपदम् । कालिदासवाङ्मयगतायाः कलायाः शब्दैकसंवेद्यत्वे अपरोक्षज्ञानविषयत्वेऽपि प्रत्यक्षज्ञानविषयता प्रतिभाति सहृदयानाम् । तथ्यमेतत् प्रकाश्यते सनातनकविभिः रेवाप्रसादद्विवेदमहोदयैरेवं स्वकीये कालिदाससमीक्षाविषयके **कालिदासभारती**-ति नाम्नि ग्रन्थविशेषे -

**एके सत्कवयः प्रबन्धरचनाशौण्डीर्यधुर्याः परे,**
**नानारूपकसन्धिबन्धकलनाटोपैकबद्धादराः।**
**वाचामेव विचित्रगुम्फनविधावन्येऽद्भुता किन्तु यः,**
**सामग्र्येण समग्रतां कवयतेऽसौ कालिदासः परम् ॥**[1]

नृत्यलग्नायाः भगवत्याः सरस्वत्याः उरसि विद्यमानं क्रीडाशैलद्वयं महाकवेरस्य कविताकामिनीं सूते सहृदयैकगोचराम् –

**सङ्गीतमथ साहित्यं सरस्वत्याः स्तनद्वयम् ।**
**एकमापातमधुरम् अन्यदालोचनामृतम् ॥**

महामेधसा महाकविना कालिदासेनोपग्रथितानि विश्वप्रसिद्धानि सप्त काव्यरत्नानि । तद्यथा [2]-

**खण्डकाव्यद्वयम्** - ऋतुसंहारम् (ऋ.) मेघदूतञ्चेति (मे.), **महाकाव्यद्वयम्** – कुमारसम्भवम् (कु.) रघुवंशञ्चेति (र.), **नाटकत्रयम्** - मालविकाग्निमित्रम् (मा)., विक्रमोर्वशीयम् (वि.) अभिज्ञानशाकुन्तलञ्चेति (अ.)।

रघुवंशमहाकाव्ये महाकविः 'ललितकला' इत्यस्य शब्दविशेषस्य प्रयोगं विदधाति । तृणबिन्दुरित्यस्य महर्षेः शापेनाक्रान्ता हरिणी नामा काऽपि अप्सरा दिव्यमात्मानं शरीरं विहाय मर्त्यलोके मनुष्यत्वमगात् । शापोन्मोचनाय तया ऋषिः सम्प्रार्थितः । तत्प्रार्थनां स्वीकृत्य शापादुन्मोचनं भविष्यति तस्याः स्वर्गस्थस्य पुष्पसंपर्केणेति प्रतिश्रुतं महर्षिणा । इन्दुमतीरूपेण अप्सरैषा कोसलाधिपतेः अजस्य अर्धांगिणी अभवदन्यस्मिन् जन्मनि मर्त्ये । देवर्षेः नारदस्य स्वर्गस्थस्य वीणायाः अग्रभागात् च्युता पुष्पमाला मर्त्यलोकस्थां इन्दुमतीं स्पृशति तेन च सा मनुष्यशरीरान्मुक्तिं लेभे । प्रियतमायाः वियोगेनाक्रान्तः अजः इन्दुमतीं सम्बोध्य विलपत्येवं तन्निष्ठं कलाकलापाभ्यासगतं वैशिष्ट्यं प्रकाशयन् –

**गृहणी, सचिवः, सखा, मिथः,**
**प्रियशिष्या ललिते कलाविधौ।**
**करुणाविमुखेन मृत्युना,**
**हरता त्वां वद, किं नु मे हृतम्॥** ( र. 8.67)

शृङ्गारे भृशं रज्यतोऽन्तःकरणस्यास्य महाकवेः दरीदृश्यते जागरूकता यथावसरं प्रयोगेषु कलानाम् ।

रघुवंशीये[3] पद्यरत्नेऽस्मिन् कलापदेन कामसूत्रस्याङ्गविद्यात्वेन परिगणिताः वादित्राद्यश्चतुःषष्टिः कलाः विनिर्दिष्टाः सन्ति । सनातनकविः रेवाप्रसादद्विवेदी **'कालिदास अपनी बात'** नाम्नि ग्रन्थे ललिते कलाविधाविति प्रयोगं विशदयति – 'अत्र कलया सह सम्बद्धः विधिशब्दः प्रयोगपर एव, कलानां ललितविधिरेव ललिताः प्रयोगाः।'[4] एवमेव मालविकाग्निमित्रे गीतनृत्ययोर्निपुणा मालविकाऽपि ललितविधानेन योजिता विधात्रा –

**अव्याजसुन्दरीं तां ललितविधानेन योजयता।**
**परिकल्पितो विधात्रा बाणः कामस्य विषदिग्धः।**।मा.2.13

**गीतं नृत्यं च वादित्रं त्रयं सङ्गीतमुच्यते** इति परिभाषया कालिदाससाहित्ये उपनिबद्धान् सङ्गीतस्य काञ्चन सन्दर्भानधस्तादुपस्थापयामि –

**1. गीतम् –** भवत्येतच्चतुर्विधं –

1. **स्वरगम्** , 2. **पदगम्** , 3. **लयगम्**

4. **चेतोवधानगञ्च**।

गीतस्य सर्वेषामपि भेदानां कालिदासीयाः प्रयोगाः प्राप्यन्ते । कुमारसम्भवमहाकाव्यस्यादावेव भगवत्याः सौन्दर्यवर्णनप्रसङ्गे महाकविः कथयति, यदासीद् भगवत्याः पार्वत्याः स्वरः अमृतस्त्रावि एवम् –

**स्वरेण तस्याममृतस्त्रुतेव**
**प्रजल्पितायामभिजातवाचि।**
**अप्यन्यपुष्टा प्रतिकूलशब्दा**
**श्रोतुर्वितन्त्रीरिव ताड्यमाना॥** ( कु.1.4)

---

* एसोसियेट प्रोफेसर, संस्कृतविभागः, विक्रमाजीतसिंह-सनातनधर्म-महाविद्यालयः, नवाबगंज, कानपुर।

कालिदासमते भगवत्याः स्वरेण तिरस्कृतिं लभते वितन्त्री वीणेव ताड्यमानः कोकिलालापोऽपि । अत्र पुनः स्वरगतं वैशिष्ट्यमुपलक्ष्यते संगीतशास्त्रानुमोदितम् ।

भगवती पार्वती भगवन्तमवाप्तुं तपस्तपति । तत्र सैषा भगवती भगवतो पिनाकिनः चरितस्य गीतिक्रमे (वर्णो गीतिक्रमः) स्वकीयैः सबाष्पकण्ठस्खलितैः पदैः वनान्तसङ्गीतसखीः अरोदयत् एवम् -

**उपात्तवर्णे चरिते पिनाकिनः**

**सबाष्पकण्ठस्खलितैः पदैरियम्।**

**अनेकशः किन्नरराजकन्यका**

**वनान्तसङ्गीतसखीररोदयत्॥** ( कु. 5.56)

**नासाकण्ठमुरस्तालुजिह्वादन्तांश्च** संजायमानः तन्त्रीकण्ठ-जन्मा स्वरविशेषः षड्जः। षड्जोऽयं स्वरः आविष्कृतावस्थायां शुद्ध-विकृतभेदेन च्युत-अच्युतभेदेन वा द्विविधो भवति। मयूरः षड्जं वदति, केका वाणी मयूरस्य भवतीत्येतत् सर्वं जानाति कालिदासः।

पुत्रकाम्यया गुरोर्वसिष्ठस्याश्रमं गच्छतोः दिलीप-सुदक्षिणयोः रथनेमिस्वनोन्मुखैः शिखण्डिभिः षड्जसंवादिनीः केका द्विधा भिन्नाः-

**मनोऽभिरामाः शृण्वन्तौ**

**रथनेमिस्वनोन्मुखैः।**

**ष.ड्जसंवादिनीः केका**

**द्विधा भिन्ना शिखण्डिभिः॥**( र.1.39)

आत्मशास्त्रविदां स्तुतियोग्यः मूर्च्छनापरिगृहीतकैशिकैः किन्नरैः गीतमङ्गलः परमेश्वरः व्यबुध्यत-

**स व्यबुध्यत बुधस्तवोचितः**

**शातकुम्भकमलाकरैः समम्।**

**मूर्च्छना-परिगृहीत-कैशिकैः**

**किन्नरैरुषसि गीतमंगलः॥** कु. 8.85

संगीतशास्त्रे मूर्च्छना हि कम्पनयुक्ताः सप्त स्वराः, कैशिकश्च प्रभातकालीनो रागविशेषः।

उर्वश्याः वियोगे उन्मत्ते पुरूरवसि श्रूयन्तेऽनेकाः गीतयः विक्रमोर्वशीयस्य सम्पूर्णेऽपि पञ्चमाङ्के व्याप्ताः - **चर्चरी, खड्गधारा, मल्लघटी, द्विपदी, चतुष्पदी, गलतिका** चेति।

अभिज्ञानशाकुन्तले सङ्गीतशालायां हंसपदिका कलविशुद्धायाः गीतेः स्वरसंयोगात्मकं वर्णपरिचयं करोति (अ. 5.1.3)। चेतोवधानमिति गीतभेदं कालिदासो बहु मन्यते। अभिज्ञानशाकुन्तलस्य पञ्चमे अङ्के शकुन्तलाया विरहाद् उत्कण्ठितः दुष्यन्तः मधुराणां शब्दानां मनसि प्रभावं स्मरति एवम् -

**रम्याणि वीक्ष्य मधुराँश्च निशम्य शब्दान्**

**पर्युत्सुकी भवति यत् सुखितोऽपि जन्तुः।**

**तच्चेतसा स्मरति नूनमबोधपूर्व**

**भावस्थिराणि जननान्तरसौहृदानि॥** (अ. 2.1)

2. **नृत्यम्** –नृत्यं द्विविधं भवति– नाट्यमनाट्यञ्चेति। **नाट्यं** ह्यभिनयः स्वर्ग-मर्त्य-पातालादिलोकस्थितानां कार्याणां नटनम्। **अनाट्यं** पुनः नर्तकाश्रितं शुद्धं नृत्यम्.नृत्तरूपं वा भवति ।

2.1 **नाट्यम्-** मालविकाग्निमित्रस्य मङ्गलाचरणे नाट्यस्य वैशिष्ट्यमेवं निरूपयति महाकविरसौ -

**देवानामिदमामनन्ति मुनयः शान्तं क्रतुं चाक्षुषं।**

**रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।**

**त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते**

**नाट्यं भिन्नरुचेर्जनस्य बहुधाऽप्येकं समाराधनम्॥**

मा. 1.4

एवमेव – **'प्रयोगप्रधानं हि नाट्यशास्त्रम्'** (मा. 1.16.9)

मालविकाग्निमित्रे शिल्पाधिकारे योग्या (1.7.1) मालविका **वाक्यम्, सूचा, अङ्कुरः, शाखा, नाट्यायितम्, निवृत्त्यङ्कुरश्चेति षडङ्गम्**[5] सर्वमनवद्यम् अभिनयं करोति। मालविका उपगानं कृत्वा चतुष्पदवस्तु गायति एवम्-

**दुल्लहो पिओ मे तस्मिं भव हिअअ णिरासं,**

**अम्हो अपंगओ मे परिप्फुरइ किं वि वामओ।**

**एसो सो चिरदिट्ठो कहं उवणइदव्वो, णाह**

**मं पराहीणं तुइ परिगणअ सतिण्हं॥**

(दुर्लभः प्रियो मे तस्मिन् भव हृदय निराशम्

अहो अपाङ्गो मे परिस्फुरति किमपि वामः।

एष स चिरदृष्टः कथमुपनेतव्यो

नाथ मां पराधीनां त्वयि परिगणय सतृष्णाम्।।) (मा. 2.4 )

अत्र-

**जनमिमनुक्तं विद्धि नाथेति गेये**

**वचनम्** (वाक्यम्), **अभिनयन्त्या स्वाङ्गनिर्देशपूर्वम्**(अङ्कुरः)।

(मा. 2.5)

**हस्तैरन्तर्निहितवचनैः** (शाखा) **सूचितः सम्यगर्थः** (सूचा)

**पादन्यासो लयमुपगतस्तन्मयत्वं रसेषु** (नाट्यायितम्)

**शाखायोनिर् मृदुरभिनयः षड्विकल्पानुवृत्त**

**भावे भावे नुदति विषयान्** (निवृत्त्यङ्कुरः) **रागबन्धः स एव॥**

( मा. 2.8)

**2.2 अनाट्यम्-**

2.2.1 **नृत्यम्-** नृत्यमपि भवति षडङ्गम् । तद्यथा -

I. **करणानि -** स्थानानि, उपकरणानि।

II. **अङ्गहाराः-** अङ्गानां हरणं स्थानान्तरगमनम् एव अङ्गहारः।

III. **विभावाः -** आलम्बनविभावाः, उद्दीपनविभावाः।

IV. **स्थायिभावाः-** रतिः, हासः, शोकः, क्रोधः,
उत्साहः, भयम्, जुगुप्सा, विस्मयः, शमश्चेति नव।

V. **अनुभावाः -** स्वैः स्वैः कारणैः उद्बुद्धं बहिर्भावं प्रकाशयन् कार्यरूपः लोक एवानुभावः।

VI. **रसाः-** शृङ्गारः, हास्यः, करुणः, रौद्रः, वीरः, भयानकः, बीभत्सः, अद्भुतः, शान्तश्चेति नव।

कालिदाससाहित्ये नृत्यस्य सर्वेऽपीमे विशेषाः समुपलभन्ते । सविशेषं मालविकाग्निमित्रस्य द्वितीयेऽङ्के (मा. 2.5, 2.8) प्रयोगनिपुणायाः मालविकायाः उपरि उल्लिखिते नृत्ये सर्वेऽपीमे विशेषाः द्रष्टुं शक्यन्ते। कुमारसम्भवे अप्सरसामाद्यः प्रयोग एवाङ्गहारः ललितः । सोऽसौ विद्योततेतरां शङ्करपार्वत्योः विवाहोत्सवे अप्सरसां नृत्यप्रयोगे एवम् -

**तौ सन्धिषु व्यञ्जितवृत्तिभेदं रसान्तरेषु प्रतिबद्धरागम्।**

**अपश्यतामप्सरसां मुहूर्तं प्रयोगमाद्यं ललिताङ्गहारम्।।**कु.7.9

नृत्यप्रयोगस्य सर्वविधवैशिष्ट्यमुपलभ्यते प्रत्यक्षम् अप्सरसां प्रयोगे ।

2.2.2 **नृत्तम्-** नृत्तं हि सजीवद्यूताश्रितायाः मूलकलायाश्चरमो भेदः।

कामसूत्रे[6] भोजराजस्य शृङ्गारप्रकाशे[7] च सन्निहितेयं कला मेषकुक्कुटलावकयुद्धविधौ किन्तु कालिदाससाहित्ये नृणांताललयाश्रितम् अङ्गसञ्चालनार्थमपि नृत्तमिति पदं प्रयुक्तम् । यथा मालविकाग्निमित्रे –

**वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे**

**कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम्।**

**पादाङ्गुष्ठाऽऽलुलितकुसुमे कुट्टिमे पातिताक्षं**

**नृत्तादस्याः स्थितमतितरां कान्तमृज्वायतार्द्धम्।।**( मा. 2.6)

कालिदासीयेषु पात्रेषु सर्वेऽपि भावाः तैः परिपुष्टाश्च सर्वेऽपि काव्यरसाः प्रकर्षेणोद्भवन्ति- मेघदूते यक्ष-यक्षिण्योः, कुमारसम्भवमहाकाव्ये पित्रोः शिव-पार्वत्योः, रघुवंशमहाकाव्ये अज-इन्दुमत्योः, मालविकग्निमित्रे अग्निमित्र-मालविकयोः, विक्रमोर्वशीये पुरूरवा-उर्वश्योः, अभिज्ञानशाकुन्तले दुष्यन्त-शकुन्तलयोश्च परस्परानुरागरूपा रतिः संयोगे सम्भोगशृङ्गारम् । अजः नवपाणिग्रहणामिन्दुमतीं सदयं बुभुजे-

**सदयं बुभुजे महाभुजः**

**सहसोद्वेगमियं व्रजेदिति ।**

**अचिरोपनतां स मेदिनीं**

**नवपाणिग्रहणां वधूमिव ।।** र. 8.7

असावेवाजः उपरतायां प्रियायां कथञ्चिदष्टौ वर्षानेव जीवितुं शशाक-

**तेनाष्टौ परिगमिताः समाः कथञ्चिद्,**

**बालत्वादवितथसूनृतेन सूनोः।**

**सादृश्यप्रतिकृतिदर्शनैः प्रियायाः**

**स्वप्नेषु क्षणिकसमागमोत्सवैश्च।।** र. 8.92

एवमेवाभिज्ञानशाकुन्तले तृतीयेऽङ्के दुष्यन्तशकुन्तलयोः परस्परं वर्द्धितोऽनुरागः द्रष्टव्यः -

**अयं स ते तिष्ठति संगमोत्सुकः** (शा. 3.13),

**तपति तनुगात्रि मदनस्त्वां मां पुनर्दहत्येव।**(शा. 3.16),

**अपरिक्षतकोमलस्य तावत्**

**कुसुकस्येव नवस्य कोमलस्य ।**

**अधरस्य पिपासिता मया ते**

**सदयं सुन्दरि पीयते रसोऽस्य ।।** (शा. 3.23) इत्यादिषु प्रणयापराधाय कृतनिश्चयस्य हस्तिनापुरनरेशस्य तापसकन्यकायामत्यन्तमनुरक्तस्य दुष्यन्तस्योक्तिषु । प्रसङ्गेऽस्मिन् तापसकन्यका शकुन्तलापि स्वीयमनुरागमावरयितुं न शक्नोति । सा दुष्यन्तवदस्ति मदनसन्तप्ता प्रणयाय समुत्कण्ठितहृदया च एवम् -

**तुज्झ ण जाणे हिअअं मम उण मअणो दिवा वि रत्तिं वि।**

**णिग्घिण ! तवइ बलीअं तुइ वुत्तमणोरहाइँ अंगाइँ।।**

(तव न जाने हृदय मम पुनर्मदनो दिवापि रात्रावपि।

निर्घृण! तपति बलीयस्त्वयि वृत्तमनोरथान्यङ्गानि।।) अ. 3.15

शकुन्तला प्रणयाय उत्कण्ठितं राजानं दुष्यन्तमेवं सम्बोध्य आत्मानं रक्षति प्रणयापराधाद् अविनयान्वितात् । कामसन्तप्तापि सा विनयं उत वा विवेकं नैव परित्यजति । कथयति च राजानं सम्बोध्य-

**पौरव! रक्ख विणअं। मअणसंतत्ता वि ण हु अत्त्णो पहवामि।** (पौरव! रक्ष विनयम् । मदनसंतप्तापि न खलु आत्मनः प्रभवामि) (अ. 3.22.2) ।

संप्रयोगाङ्गभूतानां कलानां भेदेषु आलिङ्गन-चुम्बन-नखच्छेद्य-दशनच्छेद्य-सीत्कृतानि भृशं प्रयुक्तानि महाकविना। यथा अन्तःक्वणितषट्पदं पद्मं दृष्ट्वोर्वश्याः दशनच्छेद्यं, सीत्कृतं च स्मरति पुरूरवा-

**मया दष्टाधरं तस्याः ससीत्करमिवाननम्।।** वि. 4.40

एवमेव कुमारसम्भवे पित्रोः शिवपार्वत्योः विवाहानन्तरं विहारभूमौ गतायां संदृश्यते परस्पराकर्षणादयो शृङ्गारस्य परिपोषकाः अनुभावादयः एवम् -

**तौ क्षणं शिथिलितोपगूहनौ दम्पती चलितमानसोर्म्मयः।**

**पद्मभेदनिपुणाः सिषेविरे गन्धमादनवनान्तमारुताः।।**

**ऊरुमूलनखराजिमार्गणैस्तत्क्षणं हृतविलोचनो हरः**

**वाससः प्रशिथिलस्य संयमं कुर्वतीं प्रियतमामवारयत्।।**

**स प्रजागर-कषाय-लोचनं गाढ-दन्तपद-पीडिताधरम्**

**आकुलालकमरंस्त रागवान् प्रेक्ष्य भिन्नतिलकं प्रियामुखम्।।**

**तेन भङ्गिविषमोत्तरच्छदं मध्यपिण्डितविसूत्रमेखलम्।**

**निर्मलेऽपि शयनं निशात्यये नोज्झितं चरणरागलाञ्छितम्।।**

**स प्रियामुखरसं दिवानिशं तर्षवृद्धिजननं सिषेविषुः**

**दर्शनप्रणयिनामदृश्यतामाजगाम विजयानिवेदितः।।**

(कु. 8.86-90)

अद्वितीयमेव महाकवेः खण्डकाव्यं मेघदूतं सम्पूर्णमपि विप्रलम्भशृङ्गारवर्णने । खण्डकाव्यस्यास्य पद्येऽस्मिन् सम्भोग-विप्रलम्भयोरेकत्र समावेशः -

**शब्दाख्येयं यदपि किल ते यः सखीनां पुरस्तात्**

**कर्णे लोलः कथयितुमभूदाननस्पर्शलोभात्।**

**सोऽतिक्रान्तः श्रवणविषयं लोचनाभ्यामदृष्ट-**

**स्त्वामुत्कण्ठा-विरचित-पदं मन्मुखेनेदमाह।।** (मे.101)

संस्कृतनाटकेषु विदूषकस्य समावेशः नायकस्य मनोविनोदार्थं कविभिर्विधीयते । महाकविः कालिदासोऽपि विदूषकमुखेन शिष्टपरिहासमुपस्थापयति त्रिष्वेव नाटकेषु । मालविकाग्निमित्रस्य कपोतविडालाख्ये चतुर्थेऽङ्के विदिशाधीशस्य अग्निमित्रस्य अभिन्नमित्रस्य माणवकनाम्नः विदूषकस्य संवादेषु हास्यरससन्निवेशः भृशं प्राप्यते (मा. 4.16.16 – 21) ।

विक्रमोर्वशीये एवमेव माणवको नाम विदूषकः उर्वशी-चित्रलेखयोः संवादप्रसङ्गे स्वाभाविकं परिहासं प्रस्तौति (वि. 3.10.20- 3.12.7) ।

अभिज्ञानशाकुन्तले माधव्यो नाम विदूषकः नितान्तं मनोहरं परिहासं करोति यदा तपस्विकन्यायामासक्तो राजा हस्तिनापुरतः समागतात् करभक-नाम्नः दूतात् मातरः सन्देशं प्राप्नोति आगामिनि चतुर्थे दिवसे पुत्रपिण्डपालन-नाम्नः उपवासस्य पारणायां राज्ञः उपस्थितिविषयकम् (अ.18.15)। एकत्र गुरुजनाज्ञापरवशः अपरत्र च मुनिकन्यायामासक्तो राजा हस्तिनापुरं प्रेषयति आत्मनः प्रतिनिधिरूपेण माधव्यम् । सोऽसौ माधव्यः बह्वत्र परिहसति अवसरं लब्ध्वा (अ. 2.18.16-2.19.7)। मित्रस्य दुष्यन्तस्यानुरोधं स्वीकृत्य माधव्यः तस्य अनुजरूपेण तेन चात्मानं युवराजं परिकल्प्य हस्तिनापुरं गच्छति मातृणामुपवासपारणायाम् आत्मानमुपस्थापयितुमेवम् – (अ. 2.19.4)

**तेन हि जह राआणुएण गंतव्वं तह गच्छेमि**

(तेन हि यथा राजानुजेन गन्तव्यं तथा गच्छामि) ।

रघुवंशमहाकाव्येऽष्टमे सर्गे दिवङ्गतायाम् इन्दुमत्याम् अजस्य धृतिरस्तमिता, रतिश्च्युता, गेयं विरतम्, ऋतुः निरुत्सवः आभरणप्रयोजनं गतम्, शयनीयञ्चिरशून्यञ्च सञ्जातानि। अत्र अजस्य विलापेन (र. 8.40-93) करुणापि करुणायते।

रघुवंशमहाकाव्ये दिलीप-रघु-अज-दशरथ-श्रीरामचन्द्र-प्रभृतीनाम् इक्ष्वाकुवंशोद्भवानां राज्ञां सर्वेषु युद्धेषु वीर-रौद्रयोः रसयोः परिपाकाः परिदृश्यन्ते । इन्दुमतीं स्वयंवरे उपयम्य प्रत्यागच्छति अजः कोसलदेशम् । सर्वेऽपि स्वयंवरे सौन्दर्यप्रतिस्पर्द्धायां तेन पराजिताः योद्धुकामाः राजानः विदर्भदेशाद् बहिरागतस्य तस्य मार्गमवरुन्धन्ति । संग्रामः प्रवर्तते किन्तु अहिंसामवलम्ब्य । अजः विचन्तयति यदि नरसंहारो विधीयते संयुगे शत्रुपक्षीयाणां तर्हि सद्यः विवाहिता इन्दुमतिरुद्विग्ना भविष्यति तन्निष्ठां बीभत्सतां पश्यन्ती। अत एव असौ - **न चारिहिंसा विजयश्च हस्ते** – इत्येवं युद्धं विदधाति। कविरत्र युद्धं वर्णयत्येवम् -

**पत्तिः पदातिः रथिनं रथेश-**

**स्तुरङ्गसादीतुरगाधिरूढम्।**

**यन्ता गजस्याभ्यपतद् गजस्थं**

**तुल्यप्रतिद्वन्द्वि बभूव युद्धम्।।** (र. 7.37)

**रथी निषङ्गी कवची धनुष्मान्**

**दृप्तं स राजन्यकमेकवीरः।**

**विलोडयामास महावराहः**

**कल्पक्षयोद्वृत्तमिवार्णवाम्भः।।** (र. 7.56)

महावराहः यथा कल्पक्षये समुद्रं विलोडयामास तथैव अजोऽपि दृप्तं शत्रुपक्षं विलोडयामास एव न पुनः प्राणानहरत् ।

इन्दुमतीस्वयम्वरानन्तरमजेन सह तन्मार्गावरोधनाय उपस्थितानां स्वयंवरे पराजितानां प्रतिद्वन्द्विनां राज्ञां युद्धवर्णनप्रसङ्गे वीररसेन सह बीभत्समपि रसयति कविः सविस्तमेवम् -

**शिलीमुखोत्कृत्तशिरःफलाढ्या**

**च्युतैः शिरस्त्रैश्चषकोत्तरेव।**

**रणक्षितिः शोणितमद्यकुल्या**

**रराज मृत्योरिव पानभूमिः॥** (र. 7.49)

**उपात्तयोर्निष्कुषितं विहङ्गै-**

**राक्षिप्य तेभ्यः पिशितप्रियाऽपि।**

**केयूरकोटिक्षततालुदेशा**

**शिवा भुजच्छेदमपाचकार॥** (र. 7.50)

**कश्चिद् द्विषत्खड्गहृतोत्तमाङ्गः**

**सद्यो विमानप्रभुतामुपेत्य।**

**वामाङ्कसंसक्तसुराङ्गनः स्वं**

**नृत्यत्कबन्धं समरे ददर्श॥** (र. 7.51)

रघुवंशमहाकाव्ये एवमेव सीतास्वयंवरानन्तरं महादेवस्य धनुर्भङ्गेन संक्रोधितः परशुरामो भार्गवः जमदग्निपुत्रः युद्धाय प्रवर्तते रामेण सह । क्षत्रियाणां शोणितेन पितृणां तर्पणाय प्रसिद्धस्य भार्गवस्यागमनस्य रौद्ररसगर्भां सूचनां ददति शिवाः एवम् –

**भास्करश्च दिशमध्युवास यां तां श्रिताः प्रतिभयं ववासिरे ।**

**क्षत्रशोणितपितृक्रियोचितं चोदयन्त्य इव भार्गवं शिवाः ॥**

(र. 11.60)।

मालविकाग्निमित्रे प्रतिरोधकानाम् आपार्ष्णिलम्बिशिखिबर्हकलापधारि अनीकं दृष्ट्वा मालविका विभेति एवम्–

**तूणीरपट्टपरिणद्धभुजान्तराल-**

**मापार्ष्णिलम्बिशिखिबर्हकलापधारि ।**

**कोदण्डपाणि निनदत् प्रतिरोधकाना-**

**मापातदुष्प्रसहमाविरभूदनीकम् ॥** (5.10)

कुमारसम्भवे आत्मानमात्मन्यवलोकयन्तमक्षरं शिवं दृष्ट्वा कामो बिभेति एवम्-

**स्मरस्तथाभूतमयुग्मनेत्रं**

**पश्यन्नदूरान्मनसाऽप्यधृष्यम्।**

**नाऽलक्षयत् साध्वससन्नहस्तः**

**स्त्रस्तं शरं चापमपि स्वहस्तात्॥** कु. 3.51

अभिज्ञानशाकुन्तले प्रथमेऽङ्के शरपतनभयात् स्यन्दनालोकभीतस्य सारङ्गस्य (1.7) गजस्य च (अ. 1.30) स्वाभाविकं भयं प्रदर्शितमस्ति महाकविना सहृदयमनःप्रसादाय –

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टिः**

**पश्चार्धेन प्रवृष्टः शरपतनभयाद् भूयसा पूर्वकायम् ।**

**दर्भैरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा**

**पश्योदग्रप्लुतत्वाद् वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥**

(अ.1.7)

**तीव्राघातप्रतिहततरुस्कन्धभग्नैकदन्तः**

**पादाकृष्टव्रततिवलयाऽऽसङ्गसञ्जातपाशः ।**

**मूर्त्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो**

**धर्मारण्यं प्रविशति गजः स्यन्दनालोकभीतः ॥**

(अ.1.30)

उपात्तविद्यः वरन्तुशिष्यः गुरुदक्षिणार्थी कौत्सः यदा विहिताध्वं रघुं चतुर्दशकोटिं वित्तं (निष्कं) याचते तदा जगदेकनाथः रघुः गुर्वर्थमर्थिने पारदृश्वने कौत्साय दातुं गामात्तसारामवेक्ष्य कुबेरादर्थं निष्क्रष्टुं प्रदोषे प्रयान्तुं वशिष्ठमन्त्रोक्षणजात् प्रभावादुदुन्वदाकाशमहीधरेष्वक्षुण्णगतिं कल्पितमस्त्रगर्भं रथमधिशेते। समुपस्थिते प्रातःकाले प्रयाणाभिमुखाय तस्मै कोशगृहे नियुक्ताः जनाः सविस्मयं सूचयन्ति **'कोशगृहस्य मध्ये नभस्तः पतितां हिरण्यमयीं वृष्टिम्'**। अद्वितीयोऽयमद्भुतरसस्य प्रसङ्गः यत्र धनाधिपतिः कुबेरः स्वयमेव अपर्याप्तां सुवर्णस्य वृष्टिं विदधाति मर्त्यलोके राज्ञः अध्वरदानरिक्तस्य कोशस्य परिपूरणाय –

**प्रातः प्रायाणाभिमुखाय तस्मै**

**सविस्मयाः कोषगृहे नियुक्ताः ।**

**हिरण्मयीं कोषगृहस्य मध्ये**

**वृष्टिं शशंसुः पतितां नभस्तः ॥** र. 5.29 ॥

शान्तरसोऽपि कालिदासायात्यन्तं रोचते। रघुवंशे प्रत्येकं प्रतापी राजा वयस्योत्तरार्द्धे शान्तिमार्गममेवानुसरति–

**प्रथमपरिगतार्थस्तं रघुः संनिवृत्तं,**

**विजयमनभिनन्द्य श्लाघ्यजायासमेतम्।**

**तदुपहितकुटुम्बः शान्तिमार्गोत्सुकोऽभू-**

**न्नहि सति कुलधुर्ये सूर्यवंश्या गृहाय ॥** (र. 7.71)

अभिज्ञानशाकुन्तले महर्षेः कण्वस्याश्रमं नितान्तं शान्तमस्ति। यथानुभवति दुष्यन्त **'शान्तमिदमाश्रमपदम्'** (अ. 1.15) इति उद्गिरन् । अत्रैव एवमुपदिशति काश्यपः शकुन्तलाम् -

**भूत्वा चिराय चतुरन्तमहीसपत्नी**

**दौःष्यन्तिमप्रतिरथं तनयं निवेश्य ।**

**भर्त्रा तदर्पितकुटुम्बभरेण सार्धं**

**शान्ते करिष्यसि पदं पुनराश्रमेऽस्मिन्॥** (अ. 4.20)

काश्यपस्याश्रमे तपस्तपताम् ऋषीणां स्वरूपं शान्तरसावकीर्णं कविना उपवर्ण्यते एवम् –

**प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने**

**तोये काञ्चनपद्मरेणुकपिशे धर्म्याऽभिषेकक्रिया ।**

**ध्यानं रत्नशिलागृहेषु विबुधस्त्रीसंन्निधौ संयमो**

**यत्काङ्क्षन्ति तपोभिरन्यमुनयः तस्मिन् तपस्यन्त्यमी॥**

(अ. 7.12)

**3. वाद्यम् –** भवति हि वाद्यं चतुर्विधम् । भरतमुनिः नाट्यशास्त्रस्य षष्ठेऽध्याये वाद्यवृन्दाय आतोद्यमिति पदं प्रयुङ्क्ते प्रस्तौति च आतोद्याय भेदचतुष्टयम् –

**ततं चैवावनद्धं च, घनं सुषिरमेव च ।**

**चतुर्विधं च विज्ञेयमातोद्यं लक्षणान्वितम् ॥**

**ततं तन्त्रीगतं ज्ञेयमवनद्धन्तु पौष्करम् ।**

**घनस्तु तालो विज्ञेयः सुषिरो वंश एव च ॥**

(6.27-28)

घनं च विततं वाद्यं ततं सुषिरमेव च, कांस्य-पुष्कर-तन्त्रीभिर्वेणुना च यथाक्रमम् इति व्याख्यया -

1. **घनम् –** शब्दोत्पादकं घण्टा-मञ्जीरादि (कांस्य)
2. **विततम् –** विस्तृतः ध्वनिर्यस्मात् तत् – जलतरङ्गः (पुष्कर)
3. **ततम् –** तन्त्रीवाद्यम् – वीणा (सितार) (तन्त्री)
4. **सुषिरम् –** वेणुः (वंशी)

महाकविः कालिदासः वाद्यानां विविधान् प्रकारान् बहुधोपस्थापयति। तद्यथा-

**भरतस्तत्र गन्धर्वान् युधि निर्जित्य केवलम्।**

**आतोद्यं ग्राहयामास समत्याजयदायुधम्॥**र.15.88

**आराध्यैनं शरवणभवं देवमुल्लङ्घिताध्वा**

**सिद्धद्वन्द्वैर्जलकणभयाद् वीणिभिर् मुक्तमार्गः॥**मे. 45

**शब्दायन्ते मधुरमनिलैः कीचकाः पूर्यमाणाः**

**संरक्ताभिस्त्रिपुरविजयो गीयते किन्नरीभिः।**

**निर्ह्रादी ते मुरज इव चेत् कन्दरेषु ध्वनिः स्यात्**

**सङ्गीतार्थो ननु पशुपतेस्तत्र भावी समग्रः॥**मे. 56

वेणुः वीणा द्वयोरेवैकत्र प्रयोगः प्राप्यते रघुवंशे-

**वेणुना दशनपीडिताधरा**

**वीणया नखपदाङ्कितोरवः ॥** र. 19.35

कीचकाः वंशीवाद्यवद् व्यवहरन्ति वायुना पूरितरन्ध्राः -

**स कीचकैर्मारुतपूर्णरन्ध्रैः**

**कूजद्भिरापादितवंशकृत्यम्।**

**शुश्राव कुञ्जेषु यशः स्वमुच्चै-**

**रुद्गीयमानं वनदेवताभिः॥** र. 2.12

रघुवंशे माण्डकर्णेः ऋषेः पञ्चाप्सरसि स्थितात् सौधाद् संगीतस्य अंगभूतः मृदंगघोषः समुद्गच्छति -

**तस्यायमन्तर्हितसौधभाजः**

**प्रसक्तसङ्गीतमृदङ्गघोषः।**

**वियद्गतः पुष्पकचन्द्रशालाः**

**क्षणं प्रतिश्रुन्मुखराः करोति॥** र. 13.40

महाकविमते उद्गायन्तीनां किन्नरीणां तानप्रदानाय हिमालयः कीचकरन्ध्रभागान् पूरयति वेणुवदेवं कुमारसम्भवे -

**यः पूरयन् कीचकन्ध्रभागान्**

**दरीमुखोत्थेन समीरणेन।**

**उद्गास्यतामिच्छति किन्नराणां**

**तानप्रदायित्वमिवोपगन्तुम्॥** कु. 1.8

अरुणगिरिनाथः कीचकस्य व्याख्यानं विदधाति स्वकीयायां टीकायां प्रकाशाख्यायामेवम्-

**'कीचकाः वेणवः । 'वेणवः कीचकास्ते स्युर्ये स्वनन्त्यनलोद्धाः' इति सिंहः । किन्नरा अश्वमुखा देवगायना इति दक्षिणावर्तः । तानो नामोद्गातव्यस्य स्वरादेरियत्तापरिच्छेदः। स चांशस्वर उच्यते । अत्राभिनगुप्तः -**

**द्विकत्रिकाचतुष्काः स्युर्ज्ञेया वंशगताः स्वराः ।**

**अधोऽधस्तारतां प्राप्तास्तानास्त्वंशस्वरो मतः ॥**

अंशस्वरलक्षणे भरतः -

**रागोऽस्मिन् निवसति यस्माच्चापि प्रवर्तते ।**

**नेता च तारमन्द्राणां योऽत्यर्थं चोपलभ्यते ॥**

**ग्राहोपन्यासविन्याससंन्यासन्यासगोचरः ।**

**अनुवृत्तश्च यश्चेह सोंऽशः स्याद् दशलक्षणः। इति ॥**

**तानप्रदानं च वंशेनैव कार्यम् ।**

**गाता यं यं स्वरं गच्छेत् तं तं वंशेन वादयेदि'ति भरतः।'**[8]

मालविकाग्निमित्रे पुनः पुरूरवा मालविकायाः नृत्यप्रयोगप्रसङ्गे मुरजवाद्यरवं श्रुत्वा त्वरां विदधते एवम्-

**धैर्यावलम्बिनमपि त्वरयति मां मुरजावाद्यरवोऽयम्।**

**अवतरतः सिद्धिपथं शब्दः स्वरमनोरथस्येव।।**मा.1.22

अस्मिन्नेव प्रसंगे राजा पुरूरवा पूर्वं पुष्करवाद्यस्य ध्वनिं शृणोति-

**जीमूतस्तनितविशङ्किभिर्मयूरै-**

**रुद्ग्रीवैरनुरसितस्य पुष्करस्य।**

**निर्ह्रादिन्युपहितमध्यमस्वरोत्था**

**मायूरी मदयति मार्ज्जना मनांसि।।**मा. 1.21

एतत् सम्पूर्णमपि सङ्गीतकं मालविकायाः नृत्यप्रस्तुतेः पूर्वं संजायते। गणदास-हरदत्तयोः नाट्याचार्ययोः नाट्यवैशिष्ट्यं प्रमाणीकर्तुं प्रस्तोष्यमाणां मालविकायाः नृत्यप्रस्तुतिं द्रष्टुकामो राजा अत्यन्तं समुत्कण्ठितोऽत्र।

रघुवंशमहाकाव्यस्य षोडशसर्गे वाद्यम् इत्यस्य शब्दस्य प्रयोगः समुपलभ्यते। अत्र पुनः ततवाद्यरूपेण प्रसिद्धस्य मृदङ्गवाद्यस्य उल्लेखः वर्तते-

**तीरस्थलीबर्हिभिरुत्कलापैः**

**प्रस्निग्धकेकैरभिनद्यमानम्।**

**श्रोत्रेषु समूर्च्छति रक्तमासां**

**गीतानुगं वारिमृदङ्गवाद्यम्।।**र. 16.64

कोसलाधिपतिः कुशः अयोध्यानगर्याः समुद्धारं विधाय तत्रैव जलक्रीडां करोति । पश्यति सोऽसौ तत्रैव जलक्रीडायां संरक्ताः राजकुलस्त्रियः। वारिमृदङ्गशब्दस्य प्रयोगोऽत्र वैशिष्ट्यं जनयति । गीतानुरक्तास्ताः वारिमृदङ्गं वादयन्ति गीतानुगम् अत्यन्तं मधुरम् ।

**'कालिदास अपनी बात'** ग्रन्थे **'कालिदाससाहित्ये कले'**-ति शीर्षके सनातनकविः चित्रकला, नृत्यम्, वाद्यम् वास्तुकला चेति चतसृणां कलानां कालिदासीयान् सन्दर्भानुपस्थापयति। आचार्यः हरिदामोदरवेणलकरमहोदयः साहित्य- अकादमीतः प्रकाशितस्य विक्रमोर्वशीयस्य भूमिकायां विक्रमोर्वशीयस्य गीतीः विस्तरेण निरूपयति। कालिदाससाहित्ये संगीतविद्यामधिकृत्य आचार्या सुषमाकुलश्रेष्ठमहाभागा समपादयदत्यन्तं महत्वपूर्णं कमपि ग्रन्थरत्नम्। कालिदाससाहित्ये संगीतविद्यायाः परिचयाय इमे सर्वेऽपि ग्रन्था अध्ययनीयाः सन्ति। एवञ्च **'कालिदासशब्दानुक्रमकोशः'**[9] इत्यस्मिन् कोशग्रन्थे काशीहिन्दूविश्वविद्यालयस्य कलासङ्कायान्तर्गतस्य संस्कृतविभागस्य आचार्यः सदाशिवकुमारद्विवेदी कालिदासीये सम्पूर्णेऽपि वाङ्मये समुपलब्धान् सङ्गीत–संगीद–पदयोः सर्वान् सन्दर्भान् संकलय्य प्रस्तौति । अत्र संगीतविषयकाः संगीतकापदेशम्, संगीतरचनाम्, संगीतव्यापारम्, संगीतसहकारिणी, संगीतशालाम् इत्यादय अन्येऽपि सन्दर्भाः कोशनिर्मात्रा प्रस्तुताः सन्ति ।[7]

कालिदाससाहित्ये सङ्गीतशास्त्रविषयका अनेके विशिष्टसन्दर्भाः महाकवेरस्य सङ्गीतशास्त्रविषयिणीमनुरक्तिम् अभिव्यञ्जयन्ति। महाकविरसौ समावेशयति सङ्गीतस्य प्रयोगविशेषान् काव्यनाट्योभयविधरचनासु प्रसङ्गविशेषेषु तत्र लालित्यमुत्पादनाय सहृदयहृदयावर्जनाय च ।

**सन्दर्भग्रन्थाः -**


1. **कालिदासभारती** – रचयिता रेवाप्रसादद्विवेदी, प्रकाशकम्- कालिदाससंस्थानम्, 28 महामनापुरी, वाराणसी- 221005, प्रकाशनवर्षम्-2005, पृष्ठसंख्या-1
2. **कालिदासग्रन्थावली** (काव्यखण्डं नाट्यखण्डमिति भागद्वयात्मकं, हिन्दीभाषानुवादसहितञ्च तृतीयं संस्करणम्) प्रधानसम्पादकः मिथिलाप्रसादत्रिपाठी, सम्पादकोऽनुवादकश्च रेवाप्रसादद्विवेदी, सहायकसम्पादकः सदाशिवकुमारो द्विवेदी, प्रकाशिका- कालिदास संस्कृत अकादमी, उज्जयिनी, प्रकाशनवर्षम् 2008।
3. **रघुवंशम्–** आचार्यमल्लिनाथकृता संजीविनीटीकासहितम्, हरिदामोदरवेलणकरकृता भूमिकायुतम्, सम्पादकः नारायणराम आचार्यः, प्रकाशकः निर्णयसागरमुद्रणालयः, मुम्बई-2, प्रकाशनवर्षम्- 1948, एकादशं संस्करणम्।
4. **कालिदास अपनी बात** – रचयिता रेवाप्रसादद्विवेदी, सम्पादकः सदाशिवकुमारो द्विवेदी, प्रकाशनम् – कालिदाससंस्थानम्, वाराणसी-5 प्रकशनवर्षम्-2005, पृष्ठसंख्या-260।
5. **नाट्यशास्त्रम्** (खण्ड-1, काव्यलक्षणखण्डः), आचार्यः भरतमुनिः, सम्पादकोऽनुवादकः टिप्पणीकारश्च रेवाप्रसादो द्विवेदी, प्रकाशकम् – भारतीय उच्च अध्ययन संस्थानम् (ध्र्ग्हि ध्र्ूग्ूल र्द् ्न्हिम् एूल्ब), शिमला, प्रथमं संस्करणम्– 2005, 22.40-47 पृष्ठ संख्या- 592-595
6. **कामसूत्रम्–** (प्रथम-द्वितीयभागात्मकं जयमंगलाटीकोपेतञ्च), महर्षिः वात्स्यायनः, टीककारः यशोधराचार्यः, सम्पादकः श्रीमाधवाचार्यः, प्रकाशनम्– श्रीखेमराजश्रीकृष्णदासप्रकाशनम्, बम्बई, ई0 1999, पृ0 84-87।
7. **शृङ्गारप्रकाशः-** (प्रथम-द्वितीयभागद्वयात्मकः), भोजराजः, सम्पादकः रेवाप्रसादो द्विवेदी, सहायकसम्पादकः सदाशिवकुमारो द्विवेदी, प्रकाशकद्वयम् – इन्दिरागांधीराष्ट्रीयकलाकेन्द्रम् , नई दिल्ली, कालिदाससंस्थानम् , 28 महामनापुरी, वाराणसी 221005, ई0 2007, पृ. 957-965
8. **कुमारसम्भवमहाकाव्यम्-** प्रकाशिका-विवरणाख्यव्याख्याद्वयोपेतम् । सम्पादकः रेवाप्रसादद्विवेदी, प्रकाशकः सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयः, 2004, पृष्ठ 14 ।

9. **कालिदासशब्दानुक्रमकोशः** (Word-Index of Kalidas Literature) (कालिदाससाहित्यमूलपाठसहितः), सम्पादकः रेवाप्रसादो द्विवेदी, कोशनिर्माता सदाशिवकुमारो द्विवेदी, प्रकाशकम्- कालिदाससंस्थानम्, 28 महामनापुरी, वाराणसी-221005, ई. 2017, पृष्ठ. 456, 462 ।

**सङ्गीत-** सङ्गीतं कु0 5.56; मे0 56; रे0 13.40; मा0 2.1.2; शा0 5.1.3; संगीताय मे0 63

**सङ्गीतरचन–** याम् मा0 2.1.2

**सङ्गीतार्थः** मे0 56

**सङ्गीतार्थप्रहतमुरजाः** मे0 63 (पा.)

**संगीतक-** संगीतकम् मा0 1.2.5, 1.21.3, 5.10.17; संगीदेए (संगीतके) मा0 5.10.15;

संगीदं (संगीतं) मा0 1.4.5, 1.4.25, 1.20.11, 5.10.17; वि0 2.1.6; द्र. सङ्गीतं

संगीदआपदेसं (संगीतकापदेशम्) मा0 1.17.7

संगीदरअणं (सङ्गीरचनाम्) मा0 1.20.11

संगीदव्ववारं (सङ्गीतव्यापारम्) वि0 2.1.6

संगीद- सहआरिणी (संगीतसहकारिणी) मा0 5.10.17

संगीदसालं (संगीतशालम्) मा0 1.4.5

संगीदसालब्भंतरे (संगीतशालाभ्यन्तरे) शा0 5.1.3/संगीदसालांतरे (संगीतशालान्तरे) शा0 5.1.3 (पा.)

संगीतसालादो (संगीतशालातः) मा0 1.4.25

●

# ''राश्युदयमानस्य तुलनात्मकमध्ययनम्''

*डॉ. शत्रुध्नत्रिपाठी**

कल्पितक्रान्तिवृत्तस्य द्वादशात्मकविभागस्य उदये (क्षितिजोदये) यत् मानं लगति तदेव राश्युदयमानमिति संज्ञा। तच्च द्विविधं भवति लंकोदयमानं स्वोदयमानञ्च। पण्डितप्रवरमुरलीधरठक्कुरमहोदयेन लिखितमस्ति यत् प्रतिभागबिन्दुगतानां ध्रुवप्रोतवृत्तानां मध्ये द्वयोर्द्वयोर्ध्रुवप्रोतवृत्तयोरन्तरे नाडीमण्डले ये किलासवः त एव तदवच्छिन्नराशीनां निरक्षोदयासवो भवन्ति। भास्कराचार्यः गोलाध्याये आदौ प्रश्नमाह –

**भवलयस्य किलार्कलवाः समा, किमसमैरसमयैः खलु राशयः।**

**समुपयान्त्युदयं किमु गोलविद् न विषयेष्वखिलेष्वपि ते समा॥**[1]

यदि सामान्यरूपेण विचार्यते चेत् कल्पितक्रान्तिवृत्तस्य द्वादशांशो भागः राशिः प्रवहवायुना 60 घटिभिः एकं भ्रमणं करोत्यत्र. , तदा 60 ÷ 12 = 5 घटिकोदयः एकराशे उदयमानमायाति परञ्चात्र निरक्षदेशेऽपि द्वादशभागानामुदयमाने महदन्तरमवलोक्यते प्रत्यक्षश्लोकपरम्परायाम्। तत् कथमिति? मानं किमिति? अन्यदेशे किमिति? बहवः पक्षाः विचारणीयाः सन्त्यत्र।

**राश्युदयमानसंसाधने यानि महत्वपूर्ण उपकरणभूतानि तथ्यानि सन्ति, तेषां चर्चाऽत्र क्रियते-**

| | |
|---|---|
| क्रान्तिवृत्तम् | द्युज्या |
| नाडीवृत्तम् | ज्याज्ञानम् |
| गोलसन्धिः | चरखण्डः |
| अहोरात्रवृत्तम् | चापज्ञानम् |
| स्वक्षितिजम् | क्रान्तिज्या |
| निरक्षक्षितिजम् | पलभा |
| त्रिज्या | निरक्षदेशः |
| | स्वदेशः |

इदानीं राश्युदयस्य साधनस्य प्रधानभूतकारणानि कान्यत्र विच्चार्यन्ते, यतोहि कारणं विना कार्यं नोत्पद्यते, अतोऽत्र आलेखमाध्यमेन प्रदर्शनमत्र क्रियते।




प्रायः सर्वेष्वपि सिद्धान्तग्रन्थेषु राश्युदयासूनां साधनप्रक्रिया समाना एव, परञ्च केवलं शब्दभेदाद् ग्रन्थान्तरे भेदः दृश्यतेऽत्र। सर्वतोभावेन सरलग्रन्थसूर्यसिद्धान्तानुसारमत्र राश्युदयासूनां साधनं संक्षेपेण क्रियते।

**राश्युदयासूनां साधनम् –**

**त्रिभद्युकर्णार्धगुणाः स्वाहोरात्रार्धभाजिताः।**

**क्रमादेकद्वित्रिभज्यास्तच्चापानि पृथक् – पृथक्॥**

**स्वाधोऽधः परिशोध्योऽथ मेषाल्लङ्कोदयासवः।** [2]

**श्लोकस्य सूत्रार्थः-**

(क) $\frac{\text{एकराशिज्या} \times \text{परमाल्पद्युज्या}}{\text{एकराशिद्युज्या}}$ = चापं (मेषस्य)

(ख) $\frac{\text{द्विराशिज्या} \times \text{परमाल्पद्युज्या}}{\text{द्विराशिद्युज्या}}$ = चापं (वृषस्य)

(ग) $\frac{\text{त्रिज्या} \times \text{परमाल्पद्युज्या}}{\text{परमाल्पद्युज्या}}$ = चापं (मिथुनस्य)

= वृषस्य चापं – मेषस्य चापं = वृषस्य उदयासवः

मिथुनस्य चापं – वृषस्य चापं = मिथुनस्य उदयासवः

मेषस्य चापं = मेषस्य उदयासवः,

---

* आचार्यः, ज्योतिषविभागः, काशीहिन्दूविश्वविद्यालयः

गणितीयपरम्परया क्षेत्रयोः साजात्यात् अनुपातः -

(1) $\frac{\text{परमाल्पधुज्या} \times \text{ज्या 1 रा}}{\text{मेषान्तधुज्या}}$ = नाडीवृत्ते एकराश्युदयासुज्या

(2) $\frac{\text{परमाल्पधुज्या} \times \text{ज्या 2 रा}}{\text{वृषान्तधुज्या}}$ = नाडीवृत्ते द्विराश्युदयासुज्या

(3) $\frac{\text{परमाल्पधुज्या} \times \text{त्रिज्या}}{\text{मिथुनान्तधुज्या}}$ = नाडीवृत्ते राशित्रयोदयासुज्या

अत्र राशित्रयोदयासुज्या – द्विराश्युदयासुज्या

= मिथुनोदयासुज्या एवमेव

द्विराश्युदयासुज्या – एकराश्युदयासुज्या

= वृषोदयासुज्या सिद्धयति।

**यथोदाहरणम् –**[3क]

**( 1 ) मेषोदयासुसाधनम् -**

परमाल्पद्युज्या = 3141, ज्यां $30^0$ = 1719

मेषान्तद्युज्या = 3366

पूर्वोक्तसूत्रेण –

$$\frac{3141 \times 1719}{3366}$$

= 1604 अस्य चापं अस्वात्मके = 1671 सिद्धयति

एवमेव

**( 2 ) वृषोदयासुसाधनम् -** ज्या $60^0$ = 1966,

परमाल्पद्युज्या = 3141, वृषान्तद्युज्या = 3212

$$= \frac{3141 \times 2977}{3218/3318}$$

= 2905 अस्य चापं = 3463/3465

अत्र मेषोदयासु शोधिते सति

3463 – 1671 = 1762, 1795 सिद्धयति

¼ **3** ½ feFkqukn;klqlk/kue-

ज्या $90^0$ = 3438,

परमाल्पद्युज्या = 3141, वृषान्तद्युज्या = 3141

$$= \frac{3141 \times 3438}{3141}$$

= 3438 अस्य असव = 5400

अत्र मेषोदयासु शोधिते सति

5400 – 3463 = 1937 सिद्धयति

अत्र शून्यादारभ्य चक्रांश परिमितं यावत् ग्रहभोगांशादीनां स्थितिः कीदृशी भवति। अत्रआचार्यमहावीरप्रसादश्रीवास्तवेन सूर्यसिद्धान्तस्य टीकायां सम्यक् प्रतिपादितमस्ति।

**ग्रहाणां भोगांशादीनां चक्रम् -**[3ख]

| **भोगांशः** | **विषुवांशः** | **क्रान्तिः ( उत्तरा )** |
|---|---|---|
| 0 | 0-0 | 0-0 |
| 30 | 27:55 | 11:29 |
| 60 | 57:49 | 20:10 |
| 90 | 90:00 | 23:27 |
| 120 | 122:11 | 20:10 |
| 150 | 152:5 | 11:29 |
| 180 | 180:00 | 0-0 |
| | | **क्रान्तिः ( दक्षिणा )** |
| 210 | 207:55 | 11:29 |
| 240 | 237:49 | 20:10 |
| 270 | 270:00 | 23:27 |
| 300 | 302:11 | 20:10 |
| 330 | 332:5 | 11:29 |
| 360 | 360:00 | 0-0 |

**अस्मिन् प्रसङ्गे भास्कराचार्येण होराद्रेष्काणादीनां साधनार्थ असूनां साधनविधिः प्रतिपादितमस्ति ( तस्य भावार्थः ) तद्यथा -**

$\frac{30^0}{2}$ = $15^0$ होरा 1,

$$= \frac{90^0}{15} = 6 \text{ होराज्या भवन्ति}$$

$$= \frac{3141 \times 15^0 \text{ ज्या}}{15^0 \text{ द्युज्या}} = \text{एवमत्र फलं}$$

चापं अधोऽधः षष्ठात पञ्चमं, पञ्चमात् चतुर्थं, चतुर्थात् तृतीयं, तृतीयात् द्वितीयं, द्वितीयात् प्रथमं विशोधनेन होरोदयासवः भवन्ति। एवमेव-

$\frac{30^0}{90^0}$ = $10^0$ ज्या, $10^0$ एकज्या कल्पयित्वा द्रेष्काणोदयासवः साधनीयानि ते

$\frac{90^0}{10}$ = 9 भवन्ति। एवमत्र सम्पूर्णहोरासवः = 12 × 2 = 24 द्रेष्काणासवश्च 12× 3 = 36 भवन्ति।

**विविधमतानुसारेणात्र प्रदर्श्यते तुलनात्मकं राश्युदयमानम् ( अस्वात्मक-मिनिटात्मकपरिमाणयो ) -**

| ग्रन्थः | मेषस्य | वृषस्य | मिथुनस्य | |
|---|---|---|---|---|
| सूर्यसिद्धान्तः | 1670 | 1795 | 1935 | **अस्वात्मकं** |
| | 278) | (299) | (323) | **पलात्मकं** |
| | 111 | 120 | 129 | **मिनटात्मकं** |
| सिद्धान्त-शिरोमणिः | 1670 | 1793 | 1937 | **अस्वात्मकं** |
| | 278 | 298.83 | 322.83 | **पलात्मकं** |
| | (111) | 119.53 | 129.13 | **मिनटात्मकं** |
| नवीनवेधा-नुसारम् | 1675 | 1794 | 1931 | **अस्वात्मकं** |
| | (279) | (299) | (322) | **पलात्मकं** |
| | 11.7 | 119.6 | 128.7 | **मिनटात्मकं** |

उदयासुसाधनानन्तरं स्वदेशीयकरणार्थं स्वदेशोदयासुमानसाधनम् –

**तेऽभ्रादिरूपा 1670 गुणगोऽद्रिचन्द्राः 1793**

**सप्ताग्निनन्देन्दुमिता 1937 अथैते।**

**क्रमोत्क्रमस्थाश्चरखण्डकैः स्वैः**

**क्रमोत्क्रमस्थैश्च विहीनयुक्ताः॥58**

**मेषादिषण्णामुदयाः स्वदेशे, तुलादितोऽमी च विलोमसंस्थाः॥59॥** [4]

**श्लोकस्य सूत्रार्थः-**

मीनोदयासु/मेषोदयासु – चरखण्डः (प्रथमः) = स्वदेशे मेषोदयासु/ मीनः

कुम्भोदयासु/वृषोदयासु – चरखण्डः (द्वितीयः) = वृषोदयासु/ कुम्भः

मकरोदयासु/मिथुनोदयासु – चरखण्डः (तृतीयः) = मिथुनोदयासु/ मकरः

धन्वोदयासु/कर्कोदयासु + चरखण्डः (तृतीयः) = कर्कोदयास/ धनुः

वृश्चिकोदयासु/सिंहोदयासु + चरखण्डः (द्वितीयः) = सिंहोदयासु/ वृश्चिकः

तुलोदयासु/कन्योदयासु + चरखण्डः (प्रथमः) = कन्यासु/ तुला

**अस्योदाहरणम् ( गणितीयम् ) –**

अत्र चरासु कल्पितः, मेषस्य (प्रथमः) 300, वृषस्य (द्वितीयः) 240, मिथुनस्य (तृतीयः) 103

1670 – 300 = 1370 मेषोदयः। मी.
1793 – 240 = 1553 वृषोदयः। कु.
1937 – 103 = 1834 मि.। मं.
1937 + 103 = 2040 क.। ध.
1793 + 240 = 2033 सिंहः। वृ.
1670 + 300 = 1970 क.। तु.

स्वदेशोदयासवः भवन्ति।

**निष्कर्षरूपेण प्रमुखोपपत्तिः-**

(1) निरक्षस्वदेशार्कोदयान्तरं नाम् चरम्, यथोक्तं परिभाषायां।

उन्मण्डलाक्ष्मावलयान्तराले द्युरात्रवृत्ते चरखण्डकालः।

(2) वासना भाष्ये विस्तृतं चर्चितमस्ति

मेषान्ते – आदौ स्वदेशे – पश्चात् उन्मण्डले, संस्कारः - ऋणम्

एवमेव वृष – मिथुनयोरपि, संस्कारः - ऋणम् भवति

कर्क्यादौ चरखण्डानामपचीयमानत्वाद्धनं परिणमन्ति, पुनः तुलादौ उन्मण्डलस्याधः स्थितत्वात् धनं,

मकरादौ चरखण्डानामपचीयमानत्वाद् ऋणं परिणमन्ति।

**समीक्षकदृष्ट्या विशिष्टचिन्तनम् –**

(क) भास्कराचार्येण राश्युदयासुमानविषये प्रोक्तं अन्तिमे श्लोके यत्

**क्षेत्राणां स्थूलत्वात् स्थूला उदया भवन्ति राशीनाम्**

**सूक्ष्मार्थी होराणां कुर्याद् दृक्काणानां वा ॥** [5]

टीकायां मुनीश्वरःवदति - त्रिंशद्भागात्मकानां राशीनां असूक्ष्मत्वात् मेषादीनां राशीनाम् उदयाः असूक्ष्माः भवन्ति तथा चासूक्ष्मत्वेऽपि

प्राचीनानामनुरोधेन गणितलाघवार्थं राश्युदया एवोक्ता इति भावः।

(ख) वृषमिथुनयोः चरासुमध्ये अन्तरकारणप्रसङ्गे वासनाभाष्ये प्रोक्तं – अत्र धनुः करणे जीवानां स्थूलत्वाद् द्वितीयतृतीयावुदयौ नान्यैः सम्यक् पठितौ।

**गोलाध्याये उपपत्तौ प्रोक्तं-**

**यो हि प्रदेशोऽपममण्डलस्य तिर्यकस्थितो यान्त्युदयं तथास्तम्।**

**सोऽल्पेन कालेन य उर्ध्वसंस्थोऽनल्पेनसोऽस्मादुदया न तुल्याः।** [6]

अत्र टीकाकारः मरीचिः वदति, क्रान्तिवृत्तस्य यः प्रदेशःत्रिंशद्भागात्मकः कल्पितः, स प्रवहगत्यानुरोधेन तिरश्चीनतया स्थितः।

स राशिस्वल्पकालेन प्राग्भागासक्तम्। यः उर्ध्वसंस्थः (वृषः) स बहुना कालेनोदयमस्तं च प्राप्नोति।

यदा क्रान्तिवृत्तं विषुवद्वृत्ताकारं स्यात्तदा क्षितिजे तदवयवाः राशीनामुदयाः पञ्चघटयो नाक्षत्रतुल्याः संभवन्ति। यदि क्रान्तिवृतमुन्मण्डलाकारं स्यात्तदा निरक्षक्षितिजे युगपदेव संलग्नाः राशयः स्युः।

अग्रे भास्कराचार्येण सर्वं सुस्पष्टं प्रतिपादितमस्ति – तद्यथा-

**भचक्रपादास्तिथिनाडिकाभिः ................**

**निरक्षोदयाः स्वदेशे स्युः**[7]

अत्र सर्वं चरखण्डकैः संस्कृत्य प्रतिपादितमस्ति।अग्रे आचार्येण विभिन्नस्थलानां उदयप्रसंगे प्रोक्तं गोलाध्याये यत्

**यत्र लम्बांशकः जिनोनकाः तत्र केचन् राशयः**

**सदोदिताः केचन् सदास्तमिताः भवन्ति।**

**अतस्तत्र तथा कथितास्तथोदया न भवन्ति।**

**तद्यथा- यत्र लम्बजवा जिनोनकास्तत्र..............** [8]

**देशान्तरे राश्युदयज्ञानार्थं देशविशेषेणोदयमानम् –**

त्र्यंशयुङ्नवरसाः पलांशका यत्र तत्र विषये कदाचन।

....................................... क्रियादिकम् [9]

| **अक्षांशः** | **स्थितिः ( अधः )** | **उर्ध्वस्थः** |
|---|---|---|
| $69^0$-20 | धनु- मकरौ क्षितिजाधस्थौ | मिथुन –कर्कौ क्षितिजोर्ध्वै |
| | (द्विमासात्मकरात्रिः) | (द्विमासात्मकं दिनम् ) |
| $78^0$-15 | वृश्चिक – धनु – मकर – कुम्भश्च | वृष – मिथुन – कर्क – सिंहश्च |
| | (4 मासात्मिका रात्रिः) | (4 मासात्मकं दिनम् ) |
| $90^0$ | तुलादितः मीनान्तं | मेषादितः कन्यान्तं |
| | (6 मासात्मिका रात्रिः) | (6 मासात्मकं दिनम् ) |

एवमत्रोपपद्यते यत् $66^0$ अक्षांशं यावदेव एष विधिः परिकल्पनीयः, अन्यथा तदधिके अक्षांशदेशे राश्युदयमानानि बृहत्तपरिमाणानि विचित्राणि वा भवन्ति।अतो तत्रस्थानां षष्ट्यधिकाक्षांशगतानां देशानां कृते एष नियमः उदयमानसाधने न प्रयुज्यते।

**सिद्धान्ततत्वविवेके आचार्यकमलाकरेण अतीतसरलतया परिभाषापूर्वकं वैशिष्ट्यं निरूपितमस्ति-**

एकत्र उक्तं "ते स्वोदयांशाः प्रतिभागकानाम्"" एवं प्रत्यंशोदयकालांशं प्रतिपादितमस्ति परन्तु तत्र स्पष्टरूपेण विधेः प्रदर्शनं न दृश्यते। यथोक्तं-

**ते स्वोदयांशाः प्रतिभागकानाम।**

**व्यक्ष-स्वदेश-क्षितिजोदयान्तर्यतो भवेत् स्वं चरखण्डमेव।।** [10]

शेषं भास्कराचार्यसदृश एव कमलाकरेण वर्णितचरमिति।

**वर्तमानप्रसिद्धकुण्डलीनिर्माणार्थं यत् सफ़टवेयर प्रयुज्यते तदनुसारेण कथं भवन्ति उदयाः 66 अक्षांशे देशे पश्यन्तु, इदं महद् वैचित्र्यम् ( पराशर – लाईट इत्यनेन निर्मितम किमपि समीक्षात्मकं मानमत्र प्रस्तूयते–**[11]

| | |
|---|---|
| दिनांकः | 22 मार्च, 2019 ई0 |
| देशः | ग्रीनलैण्ड (Greenland) |
| स्थानम् | |
| अक्षांशः | $76^0$ – 35 उत्तरे |
| रेखांशः | $68^0$ – 20 पश्चिमे |
| **समय** | **लग्नांशादयः** |
| 6 am | कन्या - $17^0$ |
| 8:30 am | सिंहः - $17^0$ |
| 11:30 am | सिंहः - $1^0$ |

| | |
|---|---|
| 12:30 pm | सिंहः - $4^0$ |
| 4:00 pm | सिंहः - $21^0$ |
| 8:00 pm | कन्या - $14^0$ |

अत्र भिन्न-भिन्न समयानुसारेणात्र राश्युदयासु साधने महदन्तरं दृश्यते! यतोहि अस्य स्थानस्य अक्षांशः 76 अस्ति। एवमत्र 66 अंशान्तरे दूरे स्थाने अक्षांशे वा अनेन रीत्या उदयासु संसाधनं न कर्तव्यमिति। अत्र समयान्तराले उदयसाधनं दृश्यते।

**विशिष्टांशः -**

अत्र एकस्मिन् वृत्तपादे

क्रान्तिवृत्ते $60\times30^0 = 1800$ कला (मेषस्य)

क्रान्तिवृत्ते $60\times30^0 = 1800$ कला (वृषस्य)

क्रान्तिवृत्ते $60\times30^0 = 1800$ कला (मिथुनस्य)

सकलाःकलाः = 5400

$\therefore$ 5400×4 = 21600 कला 12 राशौ भवन्ति

एवमेव एकस्मिन वृत्तपादे

नाडीवृत्ते = 1670 असु (मेषस्य)

नाडीवृत्ते = 1795 असु (वृषस्य)

नाडीवृत्ते = 1935 असु (मिथुनस्य)

सकलाः = 5400 असवः

$\therefore$ 5400 × 4 = 21600 असव एकस्मिनहोरात्रे भवन्ति।

असुपदस्य परिभाषास्थले प्रोक्तं आचार्यकमलाकरेण यत् –

**स्वाहोरात्राख्यवृत्तेऽपि तन्मिता एव चांशकाः।**

**असवस्तत्कला प्रोक्ताः कालज्ञानप्रसिद्धये।।** [12]

तत्रोक्तम् लंकोदयमानमेव सम्प्रति प्रसिद्धचापीयत्रिकोणमितिप्रकरणानां मूलमिति भृशं विचित्यम्।

निरक्षीयद्वितीय – तृतीययोदयोर्भास्करोदिताभ्यां भेदः भास्कराचार्येण जीवानां स्थूलत्वात् भेदकारणं च स्वीकृतमस्ति।

स्व. महावीरप्रसादश्रीवास्तवमहोदयेन सू.सि.टीकायां (हिन्द्यां) नेपियरमहोदयस्य समीकरणेन सायनवृषोदयमानं 1794 अस्वात्मकं स्वीकृतमस्ति।. [13]

एवमेव स्वोदयमानसाधनं $66^0$ अक्षांशं यावत् साधनीयम्, यतो तत्राधिकाक्षांशदेशे राश्युदयमानानि बृहत्परिमाणात्मकानि भवन्ति। $15^0$ - $15^0$ वा $10^0$ - $10^0$ इत्ययोः राश्युदयासुमानसाधनमपि सूक्ष्मार्थीनां कृते भवितुं शक्नोति परञ्च तत्र महत्प्रयासोऽपेक्षते।

**।। शमिति ।।**

**सन्दर्भ ग्रन्थसूची**


1 सि0शि0,गोला0. प्रश्न 06,

2 सू0सि0, त्रिपश्न0. 43,

3 (क) **सि0शि0, स्प0, 58-59,** ¼प्रभाटीकायामपि द्रष्टव्या)

3 (ख) सू.सि., त्रिप्रश्नटीकायां (महावीरप्रसादः)

4 सि.शि., त्रिप्रश्न 58-59,

5 सि.शि., त्रिप्रश्न 60,

6 सि.शि.त्रिपश्न, 16,

7 गोला0, 19-23,

8 गोला0 त्रिप्रश्न/25,

9 सि.शि., त्रिप्रश्न – 135,

10 सू.सि., त्रि – 44, (टीकायां – आचार्यसुधाकरः)

11 पराशर – लाईट, प्रसिद्ध कुन्डली निर्माण का साफ्टवेयर

12 सि0त0वि0,त्रि-124

13 सू.सि., त्रिप्रश्नटीकायां (महावीरप्रसादः) पृष्ठ 246


●

# जगत्सृष्टिनिरूपणम्

*डॉ. मिताली देव*[*]

**जगच्छब्दार्थः**

गच्छतीति जगत्। गम्धातोः ''अन्येभ्योऽपि दृश्यते''[1] इति सूत्रेण क्विप्प्रत्यये ''द्युतिगामि जुहोतीनां द्वे च'' इति वार्तिकेन गम्धातोर्द्वित्वे अभ्यासकार्ये जगम् इत्यवस्थायामनुनासिकलोपे तुगागमे च 'जगत्' शब्दो निष्पाद्यते। गच्छति संसरति अवस्थान्तरं प्रतिपद्यते यत्तज्जगदुच्यते। अनादिकालादेव इदं प्रत्यक्षादिप्रमाणेन सन्निधापितं प्रतिनियतदेशकालफलाश्रयं मनसापि अचिन्त्यरचनारूपम् उत्पत्तिस्थितिलयादिषड्विधविकारवत् प्रवर्तमानं दृश्यते जगत्। तदेतत् किंकृतं किं प्रयोजनमित्यादि सर्वं यथाशास्त्रं विचार्यते।

**जगतः कार्यत्वम् :**

एतद् जगत् कार्यं निष्पाद्यम्। प्रत्यक्षत एव शरीरादि उत्पद्यमानं विलीयमानञ्च दृश्यते पृथिव्यादिजगत् कार्यं सावयवत्वाद् घटादिवदित्याद्यनुमानेनापि अस्य कार्यत्वं सिध्यति।

''तस्माद् वा एतस्मादात्मन आकाशः संभूतः आकाशाद् वायुः, वायोरग्निः'' इत्यादि श्रुतेः मयाध्यक्षेण प्रकृतिः सूयते सचराचरमित्यादि स्मृतेश्च जगतः कार्यत्वं निर्धार्यते। न च जगतः न कार्यत्वमुत्पत्तिविनाशरहितत्वात् आत्मवदित्याद्यनुमानात् अस्याकार्यत्वसिद्धिः, उत्पत्तिविनाशस्य प्रमाणसिद्धत्वात्। न च पृथिव्यादेः 'जगतोऽनन्तपर्यायत्वात् नोत्पत्तिविनाशौ, अपितु भिन्न-भिन्न-रूपेण पर्यायः (परिणामः) एवास्तु। अन्यथा तस्य प्रागभावः सर्वथा प्रध्वंसश्च स्यातामिति वाच्यम्। पर्यायरूपपरिणामादिस्वीकारेऽपि उत्पत्तिविनाशयोः सम्भवात्। अवस्थान्तरापत्तिः परिणामः पर्यायो वा स्यात् पूर्वावस्थायाः नाशः उत्तरावस्थाप्राप्तिरेव परिणामः। एवञ्चोत्पत्तिविनाशौ वस्तुनः सिद्धावेव। नहि अवस्था वस्तुनस्तदतिरिक्ता। ननु उत्पत्तिस्थितिविनाशाः उत्पत्तिनाशौ वा जगतः सतः सन्तु कार्यत्वं मास्तु। कार्यत्वं नाम कृतिजन्यत्वम्। जगच्च कस्य कर्तुः कृत्या जन्यं स्यात्। घटपटादेः कुलालादिकृतिजन्यत्वेऽपि पृथिव्यादेः कस्यापि कृतिजन्यत्वाभावात् तस्य कार्यत्वं दुर्घटमेव। न च सावयवत्वादेव कार्यत्वमिति वाच्यम्। सावयवत्वस्य उत्पत्त्यादिव्याप्यत्वेऽपि नियमतः कार्यत्वव्याप्यत्वाभावात्। न च कर्तारं विना उत्पत्त्याद्यपि कथं वस्तुनः स्यादिति वाच्यम्। उत्पत्त्यादेः परिणामपर्यायरूपत्वात् प्रकृतिस्वभावादपि सिद्धेः। अनीश्वरवादिनां मते स्वभावतः एव प्रकृतिपरिणामरूपस्योत्पत्त्यादेः सम्भावात्। तस्मान्न पृथिव्यादेः कार्यत्वमिति चेन्न सावयवत्त्वपरत् उत्पादविनाशशालित्वादेव पृथिव्यादेरपि कार्यत्वसिद्धेः। सावयवत्वकार्यत्वयोः व्याप्यव्यापकभावस्तावद् घटादौ सिद्धः। तथा च पृथिव्यादेरपि कार्यत्वम्। न च पृथिव्यादेः सावयवत्वे विवादः। किञ्च उत्पत्तिविनाशादयोऽपि न प्रकृत्यैव स्वतः सिध्यति। न चेतननिरपेक्षं जडं स्वतः प्रवर्तमानं दृष्टम्। अन्यथा रथादेरपि स्वतः गमनादि प्रसज्येत। अतः यावत् परिणामः चेतनासापेक्षः उत्पत्त्यादिपरिणामोऽपि समर्थचेतनसापेक्षः। अतः यदुत्पत्त्यादिमत् तत् कार्यमिति घटादौ व्याप्तिग्रहात् सर्वं यद् यद् उत्पत्त्यादिमत् तत् कार्यम्। यत् कार्यं तत् कृतकमनित्यम्। आकाशादि तु केषाञ्चिन्मते नित्यं नोत्पादविनाशशालित्वम्। केषाञ्चिन्मते आकाशादिसर्वप्रपञ्चः ब्रह्मातिरिक्तोऽनित्यः कार्यः उत्पादविनाशशालीति। एवञ्चात्र जगच्छब्देव यत् कार्यमनित्यम् उत्पादविनाशशालि तत् गृह्यते। यच्च नित्यं तस्य सृष्टेरभावात् प्रयोजनादिचिन्तनं व्यर्थम्।

**जगत्कर्तृत्वविमर्शः**

कार्यस्य जगतः कः कर्ता किञ्चोपादानं किं निमित्तमिति विचार्यते। तत्र कार्यं जगत् पृथिव्यादि स्वतः परिणामि न कश्चित् चेतनोऽचेतनो वा कर्त्तेति चार्वाकाः। क्षणिकं सर्वं जगत् निःस्वभावं संस्कृतं प्रतिक्षणमुत्पादविनाशशालि न स्थितिमत् न तस्य कश्चित् कर्ता अपितु प्रतीत्य-समुत्पन्नमिति बौद्धाः। उत्पत्तिस्थितिविनाशवत् सत् अनेकपर्यायम् अविच्छिन्नं जगत् नेश्वरकर्तृकमिति जैनाः। आत्मदिग्कालाकाशपरमाण्वण्वतिरिक्तं पृथिव्यादि कार्यभूतं जगत् परमात्मकृतम्। परमाणवः समवायिकारणमीश्वरोऽदृष्टादि च निमित्तं कारणं, कार्यं जगत् उत्पत्तिस्थितिनाशवदत एवानित्यं प्रागभावप्रतियोगिध्वंसप्रतियोगीति नैयायिका वैशेषिकाश्च। प्रकृतिः स्वयमेव गुणपरिणामवैषम्यात् महदादिरुपेण परिणमतीति सांख्याः वदन्ति।

अस्ति परमात्मा सर्वैश्वर्यसम्पन्नः यत्प्रणिधानाद् योगसिद्धिः, प्रणववाच्यः किन्तु आप्तकामत्वात् प्रयोजनाभावात् स न जगत्कर्ता। जगत्तु प्रकृतिपरिणामभूतमेवेति योगविदो वदन्ति। ब्रह्मैव मायोपहितं सर्वजगदभिन्ननिमित्तोपादानभूतं प्राणिनादृष्टनिमित्तं जगत् रचयति रक्षति नाशयतीति वेदान्तिनः एवञ्च जगत्सृष्टिः स्वतः प्रवृत्ता ईश्वरेण कृतेति मतद्वयं विचारमर्हति। तत्र ब्रह्मसूत्रशाङ्करभाष्ये अन्यत्र च न्यायादिशास्त्रे सप्रमाणं सयुक्तिकं चेतनकर्तृकं जगद् इति विस्तरेण प्रतिपादितम्। संक्षेपार्थस्तु- अचेतनं प्रधानादि न स्वतः चेतननिरपेक्षं जगद् आरब्धुं तद्रूपेण परिणन्तुं परिणमयितुं का समर्थ क्वचिद् दृष्टम्। न हि चेतनसहायमनपेक्ष्य स्थादि गतिं कुरुते। न च वत्सविवृद्धिनिमित्तं क्षीरस्याचेतनस्य प्रवृत्तिरुपलभ्यते तद्वद् प्रधानस्याप्यचेतनस्य पुरुषभोगापवर्गसिद्धये । प्रवृत्तिर्नाप्रामाणिकीति वाच्यम्। तत्रापि

* प्रोफेसर, संस्कृत संभाग, महिला महाविद्यालय, काशी हिन्दू विश्वविद्यालय, वाराणसी।

चेतनस्य गोः वत्सस्य गोचारकस्य न चेतनस्य प्रवर्तकत्वदर्शनात्। यः प्रभूतं दुग्धमिच्छति स प्रभूतं संप्रभूतं गाश्चारयति। न च वत्सादिचोषणं विना गोपालप्रयत्नानपेक्षं दुग्धक्षरणं दृश्यते। न च मृतायाः गोर्दुग्धप्रवृत्तिरस्ति ईश्वरवादिनां तु सर्वत्रैव जडप्रवृत्तौ नित्येश्वरज्ञानेच्छाकृतिरूपस्यापेक्षास्तीति न चेतनमनपेक्ष्य अचेतने क्वापि प्रवृत्तिः सम्भवति। अतः प्रधानस्यापि परिणामानुकूलकृत्यादिमान् कश्चित् समर्थश्चेतनः कर्ता मन्तव्यः। स च नास्मदादिः असामर्थ्यात्। घटादीनां सृष्टौ जीवात्मनां सामर्थ्येऽपि क्षित्यङ्कुरादीनां प्रजनने सामर्थ्याभावात्। तच्च सामर्थ्यमुपादानपरोक्षज्ञानचिकीर्षाकृतिमत्त्वं न जीवात्मनाम्। अत एव जगत्कर्तृत्वान्यथानुपत्त्या ईश्वरोऽपि सिद्धो भवति। क्षित्यङ्कुरादिकं कर्तृजन्यं कार्यत्वाद् घटवदित्यनुमानेन पारिशेष्याद् ईश्वरः जगत्कर्ता सिध्यति।

भगवत्पादैः श्रीशङ्कराचार्यैरपि जन्माद्यस्य यतः[2] सूत्रे- अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात् सर्वशक्तेः कारणाद् भवति''[3] इत्यादिरूपेण तथा ईक्षतेर्नाशब्दम्[4] इति सूत्रेऽपि विस्तारेण प्रधानस्य जगत्कर्तृत्वं प्रत्याख्यातम्। यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत् प्रत्यन्त्यभिसंविशन्ति[5] ''तस्माद् वा एतस्मादात्मन आकाशः सम्भूतः आकाशाद् वायुः[6]। आत्मा वा इदमेक एव अग्र आसीत् नान्यात् किंचनमिषत्। स ईक्षत लोकान्नु सृजा इति। स इमाँल्लोकानसृजत''[7]

''सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत एकोऽहं बहुस्यामिति तत्तेजोऽसृजत[8] ''द्यावाभूमिः जनयन् देव एकः'' इत्यादिश्रुतिशतैः ईक्षतिसत्सर्वशक्तिसर्वज्ञज्ञानसम्पन्नः ईश्वरो जगत्कर्तेति प्रतिपादितम्।

रचनानुपपत्तेश्च नानुमानम्[9] इति सूत्रेऽपि भाष्ये भगवत्पादैः प्रधानाद्यचेतनकर्तृत्वं जगतो युक्तिभिर्निराकृतमिति विस्तरभयान्नात्रोल्लेखः क्रियते। एवञ्च श्रुतिस्मृतितीहासपुराणादिप्रमाणैः युक्तिमतैश्च ईश्वरकर्तृकं जगदिति इति सिद्धम्।

**ईश्वरस्याभिन्ननिमित्तोपादानत्वम्:**

ईश्वरो जगन्निमित्तिकारणं नोपादानकारणमिति नैयायिकादयः। लोके उपादाननिमित्तयोर्भेददर्शनाद्। घटस्य मृदुपादानं कुलालादि-निमित्तम्। पटस्य च तन्तव उपादानं कुविन्दतूरीवेमादयो निमित्तमिति कार्यमात्रं प्रति उभयोर्भेदो दृष्टः। तथा जगद्रूपकार्यस्यापि उपादानमन्यद् यस्मिन् समवायेन वा कार्यमुत्पद्यते, यद् वा कार्यरुपेण परिणमति तत् परमाणवो वा प्रधानप्रकृतिर्वेति निमित्तमन्यद्। यद् सहकरोति तत् सहकारिकारणम् ईश्वरोऽदृष्टं देशकालाद्यन्यदेव स्यात्। न तु यदेवोपादानं तदेव सहकारीति दृष्टचरम्। यद्यप्येवं दृष्टं तथापि शास्त्रेण ईश्वरस्य जगत्कार्यं प्रति निमित्तमुपादानञ्चोभयं प्रतिपद्यते। ''सोऽकामयत बहु स्यां प्रजायेयेति[10]। स एकधा भवति त्रिधा भवति।[11] स स्वयमेवात्मानमकुरुत।'' सच्चत्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च[12]।

गीतायामपि भूमिरापोऽनलोवायुरित्यादिनाऽपरां प्रकृतिं स्वामुक्त्वा जीवभूतां परां प्रकृतिं निर्दिशति सप्तमेऽध्याये भगवान्। अतः शास्त्रप्रामाण्याद् ब्रह्मैवोपादानं निमित्तं जगतः सिध्यति। नहि लोकदृष्टिः शास्त्रदृष्टिमपवदति। लोकेऽपि लूताजन्तुः स्वसूत्रं प्रति निमित्तमुपादानञ्च दृष्टः किञ्चाभिन्ननिमित्तोपादानपक्षेऽपि उभयोर्भेद उपाधिभेदेन नोपपादयितुं शक्यते। यथा शरीरप्रधान्येन ऊर्णनाभिः उपादानं चैतन्यप्रधानेन निमित्तं तथा प्रकृतेऽपि ब्रह्म चैतन्यप्रधानतया निमित्तं स्वप्रकृतिमायाप्रधानतयोपादानमिति ईश्वरस्य जगत्कार्यं प्रति अभिन्ननिमित्तोपादानत्वं सिध्यति।

**सन्दर्भ ग्रन्थ सूची :**


1. पा0सू0 3-2-178
2. प्र.सू. 1-1-2
3. शां. भाष्य 1-1-2
4. ब्र.सू. 1-1-5
5. वै. 3-1
6. तै 2-1
7. ऐ. 1-1-1
8. छा. 16-2-1
9. ब्र. सू. 2-2-1
10. तै. 2/6
11. छा 7-26-2
12. तै. 2-6-1


●

# बौद्ध-वैदिक परम्परयोः कर्मसिद्धान्तविवेचनम्

**डॉ. सरोज कुमार पाढ़ी[*] *एवम्* रम्बुक्कन अमितानन्द थेरो[**]**

लोकेऽपि तावद् दृश्यत एवानुपदं लोका कर्माकर्मनिर्धारणे मोहमुपयान्त्येव। भारतीयपरम्परायां कर्मसिद्धान्तस्य महत्वं सर्वोपरि राजते। अतस्तद्विज्ञायात्र दिङ्निर्देशः क्रियते कर्मणां सम्बधानेकजन्मभिः सह जायतेऽथवैकेन जन्मना सह? जीवनेऽस्मिन् पूर्वजन्मकृतकर्मणां फलागमो जायतेऽथवास्यैव जन्मकृतकर्मणः? समये समये बहुभिश्चिन्तकैः अस्य प्रश्नस्य समुचितोत्तरान्वेषणाय यत्ना अप्यनुष्ठीयन्ते, परमिदानीं यावत् सर्वमान्यं निर्दुष्टं समाधानं नासादितमिति मन्यन्ते विचारकः सम्प्रत्यपि।

कर्मफलसम्बन्धे चार्वाक-जैन-बौद्ध-सांख्ययोग-न्यायवैशेषिक-पूर्वोत्तरमीमांसादिषु वैशद्येन विवेचितं वर्तते। प्रस्तुतोऽस्मिँल्लेखे भारतीयदर्शनानां बौद्ध-वैदिकदर्शनाञ्च पृष्ठभूमिमनुश्रुत्य कर्मसिद्धान्तों लोकव्यवस्था चेति विषयाः विवेचयिष्यन्ते।

एतदर्थं भारतीयदर्शनानां अवलोकनं क्रियतेऽत्र। लोकव्यवहारोऽयं यदि पूर्वकर्मनियत्रितो वर्तत इति स्वीक्रियते तदापि बहवोऽनुत्तरणीयप्रश्नाः जाग्रति परितः। पूर्वशरीरपातानन्तं किं तत्त्वमवशिष्यत? यद् व्यवस्थामिमां सञ्चालयति? प्रश्नास्यास्य समाधाने नैकमत्यं बिभ्रति भारतीयदर्शनानि। कुत्रचित् प्रकृतिः कुत्रचिदीश्वरः स्वयं कर्मैव व्यवस्थापकत्वेनापि स्वीकृतम् । आत्मवादिदर्शनेषु व्यवस्थेयं सारल्येन सञ्चलति, परमनात्मवादिनो बौद्धा अपि कर्मफलव्यवस्थामङ्गीकुर्वन्ति। यद्धि बौद्धदर्शनं वेदेश्वरात्मादिपूर्वस्वीकृतविषयान् न स्वीकरोति, तदपि कर्ममहत्वं स्पष्टतया स्वीकरोति।

बौद्धधर्मः मनोवैज्ञानिकधर्मः वर्तते। मनोविज्ञानस्य आधारशीलायां सः प्राणी जगति कम्मदायाद्, कम्मस्ससक, कम्मयोनि एवं कम्मपठिसरणमित्युक्तम्।[1] बौद्धधर्मस्य अयं कर्मवादिना तस्य बुद्धिवादिनः परिणाममस्ति। बौद्ध विचारकापि कर्मशब्दस्य प्रयोगं कृतं। शरीरिक वाचिक एवञ्च मानसिकक्रियां कर्ममिति कथ्यते। यः स्वनैतिकशुभाशुभप्रवृत्तिनां कुशलाकुशलकर्ममिति कथ्यते। भगवान् बुद्धेनापि कर्मशब्दस्य प्रयोगं बहुव्यापकरूपेण कृतम्। ते चेतनायाः अपर इति मन्यन्ते।

**चेतनाहं भिक्खवे कम्मं वदामि चेतयित्वा कम्मं करोति कायेन वाचाय मनसा वा।''[2]**

बौद्धदर्शने चेतना इति कर्ममित्युच्यते। परञ्च अस्यार्थः इदमेव नस्ति यत् अपर कर्मणां निरसनम्भवति।

द्विविधं कर्म चेतनाकर्म चेतयित्वाकर्मञ्च चित्तकर्मं (मानसिक कार्यं) चेतयित्वाकर्ममिति कथ्यते।[3] कर्मणि क्रियायाः उद्देश्यं क्रियाञ्च एवं तस्य फलविपाकं त्रैविधमर्थं स्वीक्रियन्ते।

बौद्धकर्मविचारणायां कर्मणां भिन्नैः प्रकारैः विभाजनं कृतम्। कर्मविपाकस्य परम्परां संसारोऽयं चक्रसदृशं परिवर्तनं भवति। भगवान् बुद्धेनोक्तं यत् कर्मणा विपाकस्य परिवर्तनं भवति। एवञ्च विपाकेन कर्म जायते। कर्मणा पुनर्जन्म भवति, एवञ्च इदृशी जगतः परिवर्तनं भवति।[4] एवं दृष्टिकोणे सामान्यतः नियमः वर्तते, यत् कर्म स्वकीयमिति, यत् कर्म करोति। तदेव फलं प्राप्यते। इदृशं बौद्ध विचारकः केवलमेव कर्माणां विपाके नियतता स्वीक्रियते अपितु व्याख्यायते इति।

कर्मवादस्य दार्शनिक एवं नैतिकपक्षस्यातिरिक्तं भगवान् बुद्धः तस्य सामाजिकपक्षेऽपि विश्वासंम् अकरोत्। सामाजिकक्षेत्रे ते जन्मतः वर्णव्यवस्थायां कथमपि विश्वासं न कुर्वन्ति स्म। तेषां मते कोऽपि वर्णव्यवस्थां जन्मस्य आधारे न स्वीकर्तुं शक्यते। कर्म मानवेषु भेदं न करोति। पुण्यकर्मणा आयुर्वर्धते।[5] तात्पर्यमस्ति यत् सम्पूर्णं जगत् कर्मप्रधानमस्ति।

समस्तभातीयदर्शनानां परमोद्देश्यं दुःखनिवृत्तिर्मोक्षावाप्तिश्चास्ति, तथापि प्रसङ्गतोऽत्र कर्मफलसम्बन्धे लोकव्यवस्थाविषये च बहुविवेचितमस्ति। निष्कर्षतः कर्माणि बन्धनकारकाणि भवन्तीति मतं सर्वैः मन्यन्ते। कर्मविवेचकगीताशास्त्रे प्रतिपादितम् -

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा।**

**इति मां योऽभिजानाति कर्मभिर्न स बध्यते।।[6]**

एवमेव ज्ञानेन कर्मक्षयो जायते कर्मक्षयाच्च मोक्षेऽधिगम्यत इति मतं प्रकटितं श्रीमद्भागवते-

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**

**क्षीयन्ते चास्य कर्माणि दृष्ट एवात्मनीश्वरे।।[7]**

इत्थं कर्म मोक्षमार्गस्य बाधकत्वेन सर्वत्रोपस्थापितम्। एवमेवेश्वर-पुनर्जन्म-वेदप्रामाण्याधरेणास्तिकनास्तिकानां विभाजनं कृतं वर्तते। ईश्वराधारेण चर्वाक-जैन-बौद्ध-सांख्य- पूर्वमीमांसादर्शनानि नास्तिकानि भवन्ति। कर्माधारेण तु केवलं चार्वाकदर्शनमेव नास्तिकत्वं भजते। अपराणि तु कर्मफलस्वीकारात् पुनर्जनस्वीकाराच्चास्तिकानि भवन्ति। एतेषु दर्शनेषु पूर्वमीमांसादर्शनं कर्मसिद्धान्तविवेचनप्रसङ्गे

* एसोसिएट प्रोफेसर, वैदिकदर्शनविभागः, संस्कृतविद्याधर्मविज्ञानसंङ्कायः, काशीहिन्दूविश्वविद्यालयः, वाराणसी।
** शोधच्छात्रः, वैदिकदर्शनविभागः, संस्कृतविद्याधर्मविज्ञानसंङ्कायः, काशीहिन्दूविश्वविद्यालयः, वाराणसी।

महत्वपूर्णम् । मीमांसायां कार्यकारणसम्बन्धविषये शक्तिसिद्धान्तः स्वीक्रियते।

अनेन विवेचनेनेदं निर्गलितं यत् कर्मसिद्धान्तप्रतिष्ठापनाय जीवनप्रवाहनित्यताङ्गीकर्तव्या जीवनप्रवाहनित्यतां विना कर्मवादस्य न किमपि युक्तियुक्ततात्पर्यमभिव्यज्यते। किं नित्यात्मनोऽस्तित्वं विनापि जीवनप्रवाहनित्यता सम्भाव्यते? वैदिकदर्शनदृष्ट्यात्वात्मनो नित्यत्वात् स एवातीतवर्तमानभविष्यज्जीवनानामधिष्ठानभूतः, परं बौद्धसिद्धान्ते नित्यात्मनोऽस्तित्वाभावाज्जीवनप्रवाहनित्यताव्यवस्था कठिनतरा प्रतीयते, किन्तु बौद्धसिद्धान्ते आत्मनो नित्यास्तित्वं विनापि जीवनप्रवाहनित्यता व्यवस्थाप्यते। तद्दृष्ट्या जीवनमिदं तृष्णामूलकमस्ति। अतो मनुष्यः स्वकीययेव वासनया परिभावितः सन् भवचक्रमाध्यमेन जन्ममृत्योः परिवर्तनशीलचक्रे पतितो जायते। ईश्वरवादिनोऽपि प्राय एवमेव मतं प्रकटीकुर्वन्ति यदीश्वरः केवलं जीवकर्माधारण तदनुकूलजन्मादिकार्याणि सञ्चालयति न तु स्वपक्षतः किमपि शुभमशुभं वा करोति।

सृष्टौ वर्तमानाः सर्वेऽपि पदार्थाः परस्परसम्बद्धा भवन्ति। अतो निरपेक्षरूपेण केवलमेकस्य वस्तुनो व्याख्या रहस्योद्घाटनं वा न कर्तुं शक्यते। अतो हेतोः सम्यकरूपेण कर्मसिद्धान्तावबोधाय पुनर्जन्म-आत्मा-ईश्वर-लोक-परलोक-धर्माधर्मकुशलाकुशलादिविषयाणां सम्यग्ज्ञानमावश्यकमस्ति।

एवमेव कर्मणापि भवन्ति बहुविधा विभेदाः। ऐच्छिकमनैच्छिकं स्वाभाविकमिति कर्मणां मुख्यतया भेदत्रयं स्वीक्रियते। तत्र केवलमैच्छिककर्माण्येव शुभाशुभफलव्यवस्थापकानि भवन्ति, न तु स्वाभाविकानि, अनैच्छिकानि वा। स्वाभाविककर्माण्युद्दिश्यैवाह श्रीकृष्णः-

**न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत् ।**

**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥**[8]

एवमेव-

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः।**

**लोकसङ्ग्रहमेवापि सम्पश्यन् कर्तुमर्हसि॥**[9]

**इत्थं वैदिकः बौद्धाश्च समभावेन कर्ममहत्वं स्वीकुर्वन्ति। गौतमबुद्धोऽपि स्पष्टमाह सुत्तनिपाते।**

**न जच्चा वसलो होति न जच्चा होति ब्राह्मणो। कम्मुना वसलो होति कम्मुना होति ब्राह्मणो।''॥**[10]

एतद्विवेचनाधारेणेदं वक्तुं शक्यते यत् संसारे सर्वैः, मानवैः अवश्यमेव स्वकर्माश्चरणं विधेयं। इहलोके परलोके च कर्मणः प्राधान्यम् अविच्छिन्नरूपेण राजते। पूर्वजन्मकर्मैवाद्य भाग्यरूपेणा स्माकं पुरस्तात् समुपैति। यद्यपि भारतीयदर्शनेषु भक्तिज्ञानकर्मणां सम्बन्धे परस्परं निरूद्धमतानि सन्ति तथापि सूक्ष्मेक्षिकया तदनुशीलने कृते सति एवं ज्ञायते यत् **''एकं सद् विप्राः बहुधा वदन्ति''** इति निष्कर्षः समासाधते।

**सन्दर्भ ग्रन्थ सूची :**


1. मज्झिमनिकाय, चूलकम्मविभंग सुत्त, 3/4/5
2. संयुक्त निकाय (रो) जिल्द 4, पृ0 39-40, बौद्ध धर्म के विकास का इतिहास, पृ0 84
3. बौद्ध धर्म दर्शन, पृ0 249
4. मज्झिमनिकाय (कित्तिसुत्त, 3/1/3)
5. चक्कवति, सीहनाद सुत्त (दीघनिकाय, 3/3)
6. गीता, 4/14
7. श्रीमद्भागवते, 2/21
8. गीता, 3/5
9. तत्रैव, 3/20
10. वसलसूत्र/अग्गिक भारतद्वाज सुत्त (सुत्तनिपात)


●

# सत्यव्रतशास्त्रिविरचितं श्रीबोधिसत्त्वचरितस्य- समीक्षात्मकम् अध्ययनम्

*डॉ. शिप्रा-राया**

संस्कृत-साहित्ये बहवः रससिद्धाः निष्णाताः कवयः सम्बभूवुः। तेषु भूयांसो कवयः स्वरचना-माध्यमेन अद्यापि इह जगति जीवन्ति। कथितमस्ति भर्तृहरिणा-

**जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः।**

**नास्ति येषां यशःकाये जरामरणजं भयम्॥**

साम्प्रतिक-संस्कृतसाहित्यजगति आचार्यसत्यव्रतशास्त्रिवर्यः समुज्ज्वलव्यक्ति-रूपेण चकास्ति। स दिल्लीविश्वविद्यालये प्राध्यापकः, तत्रैव विभागाध्यक्षपदमलङ्करोत्। अतः परं पुरीस्थिते जगन्नाथसंस्कृतविश्वविद्यालयस्य कुलपति-पदं जगाम। त्रिंशत्यधिकनवदशशततमखीष्टाब्दस्य ऊनत्रिंशतदिवसे स जन्म लेभे। तस्य पितुर्नाम आसीत् पण्डितचारुदेवशास्त्री। सोऽपि महान् वैयाकरणोऽभूत्। स पितुरधीने स्वीयम् अध्ययनमारब्धवान्। अतः परं संस्कृतविषये बी०ए० साम्मानिकपरीक्षायां कृतित्वेन सह उत्तीर्णोऽभवत्। पाञ्जाबविश्वविद्यालयतः संस्कृतविषये एम०ए० परीक्षायां प्रथमश्रेण्यां प्रथमस्थानमलभत्। ततः परं काशीहिन्दूविश्वविद्यालयतः गवेषणाकार्यं परिसमाप्य पीएच०डी० इति उपाधिमलभत्। संस्कृतसाहित्यस्य परम्परागतसह आधुनिकपद्धतिविषये तस्य अभिज्ञतासीत्। अनेकाभिः महत्त्वपूर्णाभिः संस्थाभिः स पुरस्कृतः यथा राष्ट्रपतिपुरस्कारेण, पद्मभूषणसम्मानेन च अन्यैश्च बहुविधैः प्रतिष्ठितैः पुरस्कारैः स सम्मानितोऽभवत्। नवाधिकमद्विसहस्रतमे वर्षे स देशस्य सर्वप्रतिष्ठितेन साहित्यपुरस्कारेण ज्ञानपीठसम्मानेन विभूषितोऽभवत्। स बहून् ग्रन्थान् अरचयत्। बहवो ग्रन्थाः तस्य प्रकाशिता जाता तेषु अतीव प्रसिद्धः 'इन्दिरागान्धिचरितं' नामकं पञ्चविंशतिसर्गात्मकं महाकाव्यम्। थाइल्याण्डदेशीया रामकथामाश्रित्य तेन रचितं 'श्रीरामकीर्तिमहाकाव्यम्' नाम सर्वातिशायिनी रचना। गौतमबुद्धस्य विविधान् प्राक्तनजन्मविवरणान् वर्णयन् स 'श्रीबोधिसत्त्वचरितं' नामकं महाकाव्यमरचयत्। 'शर्मण्यदेशः सुतरां विभातीति रचना जर्मनराष्ट्रस्य वर्णनाधारितं वर्तते। तथा च 'थाईदेशविलासः' थाईभूमेः ऐश्वर्यवर्णनाधारितं काव्यमस्ति।' 'थाइदेशविलासम्' यात्रा-साहित्यं अरचयत्। सिक्खपरम्परायाः दशमगुरु-गुरुगोविन्दसिंहस्य चरितमाश्रित्य 'श्रीगुरुगोविन्दसिंह-चरितं' नामकं प्रबन्धकाव्यमरचयत्। पुनः 'पत्रकाव्यम्' इति नाम्ना पत्रसङ्कलनं रचितवान्। 'सुभाषितसाहस्री' नाम्नी रचना तस्य व्यापिनी सङ्कलनकृतिः। एतत् विहाय बहवः गवेषणामूलकग्रन्थाः तेन रचिता। 'वृहत्तरं भारतम्' इति नाम्ना शतककाव्यम् स अरचयत्। समये-समये विदेशेष्वनेकेषु विश्वविद्यालयेषु अतिथि-प्राध्यापकरूपेण कार्यमकरोत्। दीर्घकालावधि पर्यन्तं सः थाईलैण्डदेशे न्यवसत्। बैङ्काकस्थिते शिल्पाकार्नविश्वविद्यालये संस्कृतविभागे सः प्राध्यापकः आसीत्। थाईदेशस्य राजतनया सुश्री महाचक्री सिरन्धोर्न तस्य शिष्या अस्ति। शास्त्रिवर्यात् तया संस्कृतविद्या अधीता। स भारतस्य सांस्कृतिकदूतरूपेण विख्यातो जातः। संस्कृतसाहित्ये जीवन्त-महापुरुषरूपेण प्रसिद्धः अयं विद्वान् संस्कृतस्य गौरवभूतः वर्तते। इदानीमपि तस्य सारस्वतसाधना प्रचलितेव दरीदृश्यते। देशविदेशेषु अनेकैः सम्मानैः पण्डितप्रवरः विभूषितः सः सर्वेषां कृते अनुकरणीयः।

श्रीबोधिसत्वचरितं तस्य महत्त्वपूर्णा रचना स्वीक्रियते। साहित्ये रचनेयं बौद्धकाव्यरुपेण परिगण्यते। स 'श्रीबोधिसत्त्वचरितं' नामकं महाकाव्यं बुद्धस्य प्राक्तन-जन्मनः वृत्तान्तं वर्णयन् रचितवान्। चतुर्दशसर्गात्मकमिदं महाकाव्यम्। पालिभाषया रचितं सुत्तपिटकान्तर्गतं खुद्दकनिकायस्य दशमग्रन्थरूपेण जातकः ख्यातः। बुद्धस्य बोधिसत्त्वावस्थायां जन्मान्तरस्य वर्णनं जातके समुपलभ्यते। बुद्धः पूर्वबोधिसत्त्वरूपेण पुनर्पुनर्जन्मग्रहणमकरोति। इयमस्ति महायान-बौद्धमान्यता। कदाचित् वणिक्-गृहे, कदाचित् राजवंशे पुनरपि कदापि विप्रवंशे एवंविधभावेन स मुहुर्मुहुः जन्मग्रहणं करोति स्म। जातकग्रन्थस्य वृत्तान्तं स काव्येऽस्मिन् सम्यक् भावेन चित्रितवान्। अस्य काव्यस्य अङ्गीरसौ वीरशृङ्गारौ।

ग्रन्थस्य आदौ सत्यव्रतशास्त्रिवर्येण रचनाया उद्देश्यं स्पष्टीकृतम्-

**शास्तेति नाम्ना प्रथितो महात्मा**

**बुद्धः प्रबुद्धो जनताहिताय।**

**प्राक्जन्मवृत्तान्तकथास्तदीया**

**गीर्वाणवाण्या समुदीरयामि॥**[1]

प्रथमसर्गे बोधिसत्त्वः वणिक्रूपेण वर्णितः। यदा वणिजः गोशकटेन यात्रां करोति स्म तदा भूतप्रेतयुक्तशक्तिः बाधां अजनयत्। परन्तु बोधिसत्त्वः स्वप्रतिभावलेन बाधायाः प्रतीकारं अकरोत्।

अतः परं कवि वर्णयति यत् बोधिसत्त्वः एकदा वैश्यपरिवारे जन्मग्रहणमकरोत् तद्यथा-

* उपाचार्या, अध्यक्षा च, संस्कृतविभागः, त्रिपुराविश्वविद्यालयः, त्रिपुरा

**श्रीबोधिसत्त्वो भगवान् महात्मा**

**वैश्यस्य कस्यापि गृहे प्रजज्ञे।**

**यज्जन्मना सर्वदिशः प्रसेदु-**

**र्ववुः सुखा गन्धवहाश्च भूयः॥**[2]

द्वितीयसर्गे बोधिसत्त्वः काशीनरेशरूपेण उल्लिखितः। प्रजापालनं कथं करणीयम् इत्यस्मिन् विषये प्रतिपादयति एवंविधभावेन-

**निर्णयं प्रकुरुते स्म भूपतिः, शास्त्रतो न खलु कामचारतः।**

**सत्यशान्तिकरुणाक्षमार्जवैरन्वरज्यदसौ निजाः प्रजाः॥**[3]

अष्टमे सर्गे चत्वारि आर्यसत्यानि अर्थात् दुःखं, दुःखसमुदयः, दुःखनिरोधः, दुःखनिरोधमार्गाः इत्यादयः विषयाः वर्णिताः खलुः।

**प्रोवाच सेनापतिरार्य! सत्यं व्यज्ञायि यक्षैरपि वृत्तमेतत्।**

**यदुन्मदन्तीं प्रति बद्धरागो भवन् भवानत्यवसीदतीति॥**[4]

एकादशसर्गे बोधिसत्त्वः भिक्षुकरूपेण वर्णितः। राणीमल्ली तस्मै अर्घ्यं प्रददाति। कवि वर्णयति एवंविधभावेन-

**महात्मन्! बुद्धोऽसि तवमिह शरणं मेऽति बलवद्**

**दुरुच्छेदं दुःखं सपदि समुदच्छेदि भवता।**

**यदादिष्टं तत्तत् सकलमपि कर्तास्मि भगवन्**

**जुषाणा भर्तारं पदमहमवाप्तास्मि परमम्॥**[5]

द्वादशसर्गे बोधिसत्त्वः जन्मं लेभे विप्रवंशे। कवि उल्लेखयति एवंविधभावेन-

**प्राज्यं स्वराज्यमधिकृत्य नराधिनाथे**

**तस्मिन् प्रशासति महीं सुयशः सनाथे।**

**ग्रामे क्वचिज्जनिमलब्ध कुले द्विजानां**

**बुद्धः वयं स भगवान् महितः प्रजानाम्॥**[6]

बुद्धः ममता सरलता, दया इत्यादिभिः षड्गुणैः विभूषित आसीत्-

**जातः क्रमेण ववृधे वयसाऽभिरूपः**

**सत्यक्षमार्जवदयादिगुणैः सुरूपः।**

**सद्योऽनवद्यविविधागमलब्धविद्यः**

**कृष्यादिकर्मनिपुणः शुशुभे स हृद्यः॥**[7]

त्रयोदशसर्गे बोधिसत्त्वः वणिक्रूपेण वर्णितः। व्यापारे तस्य हानिः जाता। अतः स साहाय्यार्थं मित्रस्य सकाशं जगाम। बोधिसत्त्वः पूर्वे यस्मिन् कस्मिन्नपि काले तस्य साहाय्यं कृतवान् आसीत् किन्तु स बोधिसत्त्वस्य साहाय्यं नैवाकरोत्। तस्य दुर्व्यवहारेण तेन दुःखं नन्वभवत्। अयमेव विषयः कविना अतीव उत्तमतया वर्णितः-

**मगधजनपदस्थे प्राक् पुरे राजगेहे**

**नृपतिरभवदेकः सावधानः स्वदेहे।**

**विमलमतिरुदारः कीर्तिमान् यो वदान्यः**

**समुचितमचकासीत् पुण्यवान् सर्वमान्यः॥**

**वसतिमकृत दैवात् पत्तने तत्र बुद्धः**

**सकरुणहृदयः श्रीबोधिसत्त्वः प्रबुद्धः।**

**दधदभिनवशोभां शङ्खनाम्ना प्रसिद्धः**

**प्रचुरधनसमृद्धः श्रेष्ठिमुख्यः समिद्धः॥**[8]

सर्गेऽस्मिन् पिलियश्रेष्ठी-जातककथा-विषयवस्तु वर्णितमस्ति। बोधिसत्त्वस्य एकं मित्रमासीत्। यस्य निवासस्थानमासीत् वाराणस्याम् तस्य नामासीत् पिलियः। स अशीतिकोटिरूप्यकाणाम् अधिपति आसीत्। एकदा दैवदुर्विपाकात् कष्टापन्नः पिलियः बोधिसत्त्वस्य समीपमगच्छत्। तदा बोधिसत्वः तस्मै चत्वारिंशत्कोटिपरिमितस्वर्णमुद्रान् अददत्। किन्तु यदा बोधिसत्वः तस्य विपदि पिलियं निकषा गतः तस्मिन् काले पिलियः तस्य साहाय्यं न कृतवान्। इयमेव विषयमधिकृत्य वर्णयति कविः-

**पीलियेन यदशीलमशीलि**

**तत्र येन नयनं सममीलि।**

**दुर्धियः समुद्लङ्घि न रंहः**

**सोऽनिशं जगति दीव्यतु सङ्घः॥**[9]

चतुर्दशसर्गे बोधिसत्त्व अध्यायकरूपेण वर्णितः। तस्यान्तिके बहवः छात्राः पठन्ति स्म। छात्राणां मध्ये पापक नाम्नः एकः छात्रः आसीत्। सः स्व-अभिधान- परिवर्तनमिच्छति स्म। अध्यापकः तं अवदत् – सर्वत्र अन्वेषणं कृत्वा यत् सुन्दरं अभिधानं प्रतिभाति तदेव स्वीक्रियताम्। सर्वत्र भ्रमित्वा नामविषये अभिज्ञतामनुभूय सः गुरोः समीपम् आगत्य वदति – नाम तु केवलमात्रं संज्ञा मात्रमेव भवति मूलं हि कर्मम्। सृष्टिरेषा कर्मप्रधाना। नामजातिवर्गानि इत्यादयः गौण-विषयाः-

**तच्छिष्यस्य वचो निशम्य भगवान् बुद्धो विशुद्धोदयः**

**प्रीत्या बोधयितुं तमेवमवदत् प्रेयन्। मुधा मा तमः।**

**नाम्नो नास्ति महत्त्वमत्र भुवने कर्मैव मुख्यं मतं**

**किं नाम्ना, यदि सद्गुणास्त्वयि परां शोभां स्फुटं बिभ्रति॥**[10]

कर्मणः गुरुत्वप्रसङ्गे अस्मिन् महाकाव्ये कवि वर्णितवान् एवं प्रकारेण-

**कर्म श्रेष्ठं विमलमतिभिः सर्वदा कार्यमार्यैः।**

**सर्वत्रास्मिन् जगति कथिता कर्मणैवाऽर्थसिद्धिः॥**[11]

गौतमबुद्धस्य बहूनि प्राक्तनजन्मानि व्यतीतानि। बुद्धस्य सर्वाणि जन्मवृत्तान्तानि जातके प्राप्यन्ते। यः परमज्ञानेन स्वमुक्तिलाभाय अचेष्टयन् सर्वजीवानां दुःखं अपाकर्तुं मुक्तिसाधनार्थं चेष्टयति स हि बोधिसत्त्वरूपेण परिचितः। यद्यपि मूलबौद्धसिद्धान्ते जन्मान्तरवादः न स्वीक्रियते। किन्तु तथापि प्राक्तनकर्मफलम् अनुभूय अस्मिन् जन्मनि कार्य करणीयम्। बौद्धमते मृत्योःपश्चात् नरस्य शरीरं नश्यति। किन्तु कामनाः तद्वत् तिष्ठन्ति। यद्यपि जातकस्य जन्मान्तरकथा-विषये बौद्धदर्शने मतद्वैधं दृश्यते।

अस्मिन् महाकाव्ये उपमादृष्टान्तयमकादयः अलंकाराः प्रामुख्येन विनिवेशिताः सन्ति। अन्त्यानुप्रासालङ्कारस्य सुष्ठु प्रयोगं काव्ये सङ्गीतात्मकप्रभावः जनयति। विशेषतया द्वादशे त्रयोदशे सर्गे च परिलक्ष्यति। कवेः अस्याः सफलतायाः मूलकारणं तस्य संस्कृतभाषायां अकुण्ठिताधिकारकारणात्। बहुविध छन्दसामपि उपयोगः कवेः छन्दशास्त्रज्ञानं ज्ञापयति। कविना अनुष्टुप् इति लघुछन्दसः तथा च शार्दूलविक्रीडितेति बृहच्छन्दसः काव्येऽस्मिन् समरूपेण प्रयोगः कृतः। किन्तु मध्यकोटिक-छन्दसि तस्य विशिष्टः आग्रहः दृश्यते यथा उपजातिः (प्रथमः, द्वितीयः ६५-७ षष्ठतः नवम, एकादशः २०-३, द्वादशः ९१-२, चतुर्दश ३९-४४), रथोद्धता (द्वितीयः सर्गः) भुजङ्गप्रयातः (पञ्चमः सर्गः) अन्यानि छन्दांसि अपि प्रयुक्तानि यथा शिखरिणी (दशमः, एकादशः) वसन्ततिलका (नवम ५२-४, द्वादशः सर्गः) मालिनी (द्वितीय ६१-४, पञ्चमः ३७, त्रयोदशः सर्गः)। तथैव महाकवेः दर्शनज्ञानं व्याकरणज्ञानं वेदज्ञानञ्च अस्मात् महाकाव्यात् अभिलक्ष्यते। व्याकरणे प्रयुक्ताः कतिपयाः विशिष्टाः नियमाः भाषायाः सुष्ठु प्रयोगश्च हृदयमावर्जकः यथा- अतिसंष्ठुल (१/२५), विशङ्कट (१/३४), कुमारश्रमण (६/३) आढ्कंरण (८/३) अक्षशौण्ड (८/४७) पून (९/४०) बौद्धदर्शनस्य सिद्धान्ताः अपि काव्यमाध्यमेन अवगन्तुं शक्यन्ते। महाकाव्यलक्षणदृष्ट्याऽपि काव्यमिदं महाकाव्यं मन्यते। कवेः पाण्डित्यलक्षणमपि अस्मात् महाकाव्यात् परितुष्यति। तस्मादेव अस्य महाकाव्यस्य अध्ययनं भवेदिति धिया मया अस्य संक्षेपेण परिचयः प्रस्तुतः। समासेन कथ्यते यत् – श्रीबोधिसत्त्वचरित-महाकाव्ये सत्यव्रतशास्त्रिमहोदयः सम्यक्भावेन जातकगल्पं वर्णयन् अर्वाचीनसंस्कृत-साहित्यजगति गुरुत्वपूर्णस्थानम् अलभत्।

**अन्त्यटीका**

1. श्रीबोधिसत्वचरितम् 1/1
2. तदेव, 1/5
3. तदेव, 2/11
4. तदेव, 8/106
5. तदेव, 11/18
6. तदेव, 12/2
7. तदेव, 12/4
8. तदेव, 13/1-2
9. तदेव, 13/100
10. तदेव, 14/6
11. तदेव, 14/38

**सहायका-ग्रन्थाः**

1. जातकसमग्र, ग्रन्थिक, कोलकाता- 9, प्रथमप्रकाश, कोलकाता बइमेला, 2003 ई0
2. बौद्धदर्शनेर प्रासङ्गिकभावना, साधनकमलचौधुरी, करुणा प्रकाशनी, कलिकाता- 9, 2017 ई0 (प्र0सं0)
3. श्रीबोधिसत्त्वचरितम्, सत्यव्रतशास्त्री, मेहरचन्द लक्ष्मनदास प्रकाशन, दिल्ली, 1960 ई0
4. सत्यव्रतवाङ्मयसमीक्षा, सि0 उपेन्द्र राव सम्पादित ईस्टर्न बुक लिंकर्स, दिल्ली, 2012 ई0 (प्र0सं0)

●